Adwaita Sabha Research Series No. 1

श्रीः

श्री गुरुभ्यो नमः

# ॥ चतुर्मतसामरस्यम् ॥

महामहोपाध्याय हरिहरशास्त्रिणां, महामहोपाध्यायकृष्णशास्त्रिणां,
महामहोपाध्याय दण्डपणिस्वामि दीक्षितानां, भाष्यभावज्ञ
वेङ्कटरामशास्त्रिणाञ्चानुग्रहाप्रसादितन्यायवेदान्त वैशा
रद्येन पोलकं सुन्दरशास्त्रितनूभवेन वेदान्त
स्थापक वेदान्ततत्त्वोपदेशकबिरुद्भाजा
श्री जम्बुकेश्वरस्थ जगद्गुरु विद्यास्थान
वास्तव्येन श्रीरामशास्त्रिणा
विरचितम्

कुम्भघोणस्थ श्री जनार्दन मुद्रालये
मुद्रापितं विजयतेतराम्
1944

# INTRODUCTION.

This book is the first publication of a series started by the Advaita Sabha, Kumbakonam called the 'Advaita Sabha Research Series'. The author of the book is Pandit Polagam Rama Sastri who is a very erudite scholar and is the professor of Vedanta in the Samskrit institution established by His Holiness Jagadguru Sankaracharya of Kanchi Kamakoti Peetam at Jambukeswaram (Tiruvanaikaval). He is also one of the three examiners of the Advaita Sabha. He is eminently fitted by his scholarship and powers of exposition to write this book.

It is an intelligent attempt to unify the four well known schools of Vedanta Philosophy namely the Advaita. the Srikantamatha Visishtadvaitha, and dwaitha and to show that these schools all lead step by step to the same goal the moksha. Though there has been the precedent of a work called 'Chaturmatasarasangraha' by the famous Appaiya Dikshithar, the general trend hitherto of the writings of latter-day scholars has been to expound the differences between the four schools of Indian Philosophy and to criticise one or other of them according to the mental allegiance of the author, to one or other of the schools. In that way emphasis has been laid more upon the differences

among these schools than upon their fundamental unities. The Vedanta Darsana, as a single school, is different from the other well-known darsanas of Indian Philosophy namely the Sankhya, the Yoga, the Tarkika and the Mimamsa. It also differs fundamentally from the Buddhist, Jain and other Philosophies. The four schools of Indian Philosophy dealt with, in this book, are only sub-divisions of the Vedanta darsana. This fundamental fact is often lost sight of amidst the thicket of polemical literature in this subject. Pandit Rama Sastri has in this book with his terse and powerful Samskrit style, clearly expounded the fundamental principles of the four schools and has rightly fixed the place of each school in the ladder to Moksha It will, I am sure, be of great profit to the student of Indian Philosophy especially of the Vedanta Darsana and will conduce to the clearing of many misunderstandings and prejudices among the votaries of these four schools. The Advaita Sabha is grateful to Pandit Rama Sastri for this valuable work.

"ASHRAMA",
Luz, Mylapore,

**K. BALASUBRAMANIA IYER,**
*7th March 1944.*

S. J. P. W. LTD, KMU.

श्रीः

श्रीगुरुभ्यो नमः

# शुद्धपाठसूचिका ॥

| शुद्धपाठः | पुटम् | पङ्क्तिः |
|---|---|---|
| कृतं, तथापि | 14 | 6 |
| परिणमते | 14 | 7 |
| सा च ब्रह्मणश्चिच्छक्तिः | 14 | 8 |
| चिच्छक्तिभ्याम् | 14 | 9 |
| मात्रेण भगव | 14 | 16 |
| गुणरूपेण शरीरे | 14 | 25 |
| सा चिच्छक्तिरेव | 14 | 25 |
| ज्ञानेच्छादि | 15 | 1 |
| मनश्शान्ति | 15 | 11 |
| गारदिव्यासनवरमहिषीभोग्य | 15 | 12 |
| सत्तिगमकस्य | 15 | 24 |
| तद्विवर्त | 16 | 12 |
| मार्चिरादिगतौ | 17 | 4 |
| त्वधिकरणावसानेऽपि | 17 | 9 |
| रवगम्यते | 17 | 14 |
| मनुकूलम् । इदं प्रमेय | 17 | 17 |
| संग्राहकौ | 17 | 19 |
| वलंबा सगुण | 17 | 21 |
| सत्ताप्रत्यक्षबुद्धेर्ज | 17 | 22 |
| तद्विवर्ती | 17 | 27 |
| नैयायिकादिमते तु विभुत्वं | | |
| साधितं भगवत्पादमतेऽपि | 18 | 2 |
| रूपत्वाभ्युपगम | 18 | 8 |
| सत्कार्यवादकार्यकारणानन्य- | | |
| त्वाभ्युपगम | 18 | 8 |
| प्रत्यासत्त्यतिशयस्य सत्वेन | 18 | 10 |
| भूमिकाचतुष्टय | 18 | 12 |
| काण्डद्वयेति | 18 | 14 |
| ऐतरेया | 18 | 25 |
| बहुविधत्वम् | 19 | 3 |
| निरूपणैदंपर्य | 19 | 11 |
| पासनानामपि | 19 | 12 |
| मीमांसायाम् | 19 | 14 |
| निरूपणीयकर्म | 19 | 17 |
| सहस्राभेकर | 19 | 19 |
| बाहुल्याच्च | 19 | 24 |
| भवेतग्राहको | 20 | 5 |
| उपनिषद्वचना | 20 | 9 |
| समश्नुते | 20 | 14 |
| वशेनार्चिरादि | 20 | 15 |
| साधनकलापैः | 20 | 15 |
| तत्तद्देश | 20 | 16 |
| पानतुल्यम् | 20 | 16 |
| संग्रहाख्य | 20 | 20 |
| पासनाहंग्रहो | 20 | 23 |
| भगवत्पादाभिमता | 20 | 25 |
| भ्यासपाकतः | 21 | 5 |
| परिपाकेनाहंग्रहो | 21 | 7 |
| रामानुजमते | 21 | 12 |
| ध्यनङ्गीकारे | 21 | 20 |

| शुद्धपाठः | पुटम् | पङ्क्तिः |
|---|---|---|
| अभेदानवगाहने | 21 | 24 |
| मत इव संभवा | 22 | 1 |
| ह्यहंग्रहो | 22 | 10 |
| अहमिति | 22 | 11 |
| व्याख्यानान्तरे च दहरा | 22 | 19 |
| इत्यपि | 22 | 26 |
| नन्दलहरीग्रन्थे च स्फुटं | | |
| प्रतिपादितम् | 23 | 14 |
| अधिकारिभेदेन | 23 | 16 |
| दीक्षित | 23 | 17 |
| सगुणोपासनामार्ग | 23 | 19 |
| कल्याणगुण | 23 | 22 |
| विशेषप्राप्त्य | 24 | 5 |
| स्वस्वामिभावो | 24 | 10 |
| पासनतत्त्वज्ञानाना | 24 | 12 |
| तत्व्याख्यायाम् | 24 | 15 |
| सार्ष्टिताः | 24 | 17 |
| पवर्गप्रदः | 24 | 19 |
| कोपासनस्य | 24 | 22 |
| कैवल्याख्य | 24 | 23 |
| तादात्म्यार्थो | 24 | 26 |
| तद्बुद्ध्यनुसारे | 25 | 19 |
| प्रवर्तितस्य च द्वैतमतस्य जीव | 25 | 21 |
| संसारिरूपजीवत्वयं सर्वेषा- | | |
| मपि जीवाना | 25 | 24 |
| तदेव मुक्ति | 26 | 1 |
| स्समर्पणम् | 26 | 4 |
| त्यर्थग्रन्थ | 26 | 7 |
| चिदचिद्रूप | 26 | 25 |
| चिदचितोः | 27 | 7 |
| विशिष्टाद्वैतपदेना | 27 | 11 |
| व्यहिव्रयते | 27 | 17 |
| नानात्वव्यवहारः | 27 | 20 |
| मध्वमतवत् | 28 | 1 |
| निर्विकल्पकत्व | 28 | 17 |
| इदानीम् | 28 | 21 |
| अद्वैतवासनायाः | 29 | 2 |
| चिच्छक्तेः | 29 | 7 |
| ब्रह्माभिन्नत्वम् | 29 | 8 |
| व्यवस्थापयतः | 29 | 12 |
| वगतिमतिगम्भीरा | 29 | 20 |
| मुपनिषच्छास्त्र | 29 | 22 |
| त्वेनोक्तम् | 29 | 25 |
| तन्मतोक्तप्रकारेण | 30 | 2 |
| दीक्षित | 30 | 8 |
| चतुष्टय | 30 | 9 |
| रत्नत्रयपरीक्षायाम् | 30 | 15 |
| धर्मधर्मिरूप | 30 | 16 |
| तुरीयभूमिका | 30 | 18 |
| शनैश्शनै | 30 | 20 |
| मप्यनुसरन्तम् | 31 | 1 |
| वादानाश्रित्य | 31 | 8 |
| विरोद्धुम् | 31 | 12 |
| विविधशाखाश्रितमध्वादि | 31 | 19 |
| फलततेः | 31 | 23 |
| उपनिष | 32 | 2 |

| शुद्धपाठः | पुटम् | पङ्क्तिः | शुद्धपाठः | पुटम् | पङ्क्तिः |
|---|---|---|---|---|---|
| समाकर्षकगुणगणपरिमळा-<br>तिशयो | 32 | 4 | एवानुकूल्यम् | 33 | 17 |
| समष्टिविवक्षाया | 32 | 12 | तदप्यधिष्ठितम् | 33 | 20 |
| मत्कृतिरिति | 33 | 3 | वाग्बात्मक | 33 | 22 |
| दीक्षितोक्त | 33 | 6 | प्रयोजकयुक्त्युपोद्बलकेन | 34 | 1 |
| वैदिकमतावान्तरमत | 33 | 15 | संप्राथ्योपसं | 34 | 3 |
| भङ्गुरत्वम् | 33 | 16 | गुरुर्ब्रह्मा | 34 | 5 |

इत्थं प्रमादाधिक्यसंजाता अशुद्धीः प्रथमतश्शुद्धपाठवीक्षणेन संशोध्य पश्चात् चतुर्मतसामरस्यं पठनीयमिति संप्रार्थयते सहृदयान् पोलकम् सु. श्रीरामशास्त्री श्रीजंबुकेश्वरस्थ जगद्गुरुविद्यास्थानवास्तव्यः ।

श्री गुरुभ्यो नमः

# ॥ चतुर्मतसामरस्यम् ॥

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥
विद्यासंध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे ॥
अप्पय्यदीक्षितकृतेऽत्र चतुर्मतानां सारस्य संग्रह इति प्रथिते प्रबन्धे ।
आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्रश्रीकण्ठयोगिपदवीरदवीयसीर्नः ॥
इत्युक्तिपूर्वमुपवर्ण्य पुराऽऽनुपूर्व्याचार्यपादसरणिः प्रविवेचिताऽन्ते ।
तत्सूचितं मतचतुष्टयलेखपौर्वापर्यप्रयोजकमहं विमृशामि किंचित् ॥
पुंभेदतोऽखिलमतस्य च मानभावं लक्ष्यैक्यमूलमविरोधमपि ब्रवीमि ।
मध्वादिदर्शितमतेषु मतान्तरेभ्यश्चाचार्यपादमतसन्निहितत्वमादौ ॥

सर्वज्ञैश्श्रीमदप्पय्यदीक्षितैस्तावत् न्यायमुक्तावलीनयमयूखमालिकानयमणिमालानयमञ्जरीनामकपरिच्छेदचतुष्टयोपेतः चतुर्मतसारसंग्रहनामा सर्वोत्तरः प्रबन्धः विनिर्मितो दरीदृश्यते । तत्र च परिच्छेदचतुष्टये क्रमेण मध्वरामानुज श्रीकण्ठभगवत्पादानां मतानि संगृहीतानि । यस्य चायमुपक्रमे पठितः श्लोकः

आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्रश्रीकण्ठयोगिपदवीयहीर्नः ।
आचार्यपादसरणिश्च विविच्य बोद्धुं संगृह्यते मतचतुष्टयसारलेशः ॥ इति ॥

अत्र च श्लोके पदवी सरणिरिति च पदप्रयोगेण मतचतुष्टयस्यापि मार्गरूपत्वम् मध्वादिमतत्रयस्य "नः" इत्यस्मच्छब्दोक्ताद्वैतिनामदवीयस्त्वञ्च कण्ठतः उक्त्वा मध्वरामानुजश्रीकण्ठभगवत्पादमतानां क्रमपाठः कृतः । तेनार्थात् विषयचतुष्टयमुपक्षिप्तम् । तत्र प्रथमो विषयस्तावत् सर्वमतप्रामाण्यं नाम । सर्वमतप्रा-

माण्यानङ्गीकारे हि एकस्यैव प्रमाणत्वेनाभिमतस्य मतस्य मोक्षमार्गत्वसं भवेनान्येषामप्रमाणत्वेनाभिमतानां मोक्षमार्गत्वासंभवेन च सर्वेषामपि मतानां मार्गत्वकीर्तनासाङ्गत्यापत्तेः। द्वितीयो विषयः सर्वेषामपि मतानामन्योन्यमविरुद्धत्वं नाम। स्वस्वतात्पर्यविषयीभूतोपेयरूपार्थविरोधे हि मिथः मतानां विरोधस्स्यात्। न तु तात्पर्याविषयोपायरूपार्थविरोधात् विरोधः। मतानां मार्गत्वकिर्तनेन च मतानां मार्गभेदत्वमात्रं नतु तत्प्राप्यभेदः इति सूचनात् मतानां मिथोऽविरुद्ध-त्वमाविष्कृतम्। तृतीयो विषयः मध्वाधिमतत्रयापेक्षया मतान्तराणां भगवत्पाद-मतविप्रकृष्टत्वं नाम। मतत्रयस्यादवीयस्त्वकीर्तनेनेतरेषां दवीयस्त्वोपक्षेपात्। तुरीयो विषयः भगवत्पादमतस्य मोक्षाव्यवहितपूर्वभूमिकात्वेन श्रीमद्दीक्षितेन्द्र-संमतमतस्याव्यवहितपूर्वभूमिका श्रीकण्ठमतम्, तदुभयव्यवहितमोक्षपूर्वभूमिका रामानुजमतं, तत्त्रितयव्यवहितमोक्षपूर्वभूमिका मध्वमतं, तथा च मध्वरामानुज श्रीकण्ठ भगवत्पादमतानां मोक्षप्राप्तौ क्रमिकभूमिकाचतुष्टयात्मकत्वमित्येतत्। एतदभिप्रायकत्वानाश्रयणे च दीक्षितेन्द्राणां क्रमान्तरपरित्यागेन मध्वरामानुज श्रीकण्ठभगवत्पादमतानां प्रथमद्वितीयतृतीयतुरीयभावेन निर्देशस्य निर्बीजत्वापत्तेः दीक्षितेन्द्राणामप्यभिमते तदीयग्रन्थपरिशीलनलभ्ये तदीयमतचतुष्टयक्रमनिर्देश-मुख्यप्रयोजके संभवति तत्परित्यागेन केवलमशोकवनिकान्यायेन क्रमनिर्देशस्य तदीयेच्छामात्रनिबन्धनत्वोक्त्ययोगात्। दीक्षितेन्द्राणाञ्च मध्वरामानुजश्रीकण्ठा-चार्येषु मुनिः देशिकेन्द्रः योगी इति च पदप्रयोगेण तेष्वादरातिशयसद्भावेऽपि भगवत्पादेषु नामनिर्देशं विना आचार्यपादपदमात्रप्रयोगेण तेष्वादरातिशय-विशेषस्य भक्त्यतिशयस्य चाविष्कारेण भगवत्पादमते मोक्षाव्यवहितभूमिकात्वं दीक्षितेन्द्राणामभिमतमिति सहृदयहृदयसाक्षिकमेव वस्तुतत्त्वम्। तच्च विषय-चतुष्टयं क्रमेणास्मिन् लघुनिबन्धे निरूपयामः॥

प्रथमं तावत् सर्वमतप्रामाण्यं संग्रहेण निरूप्यते, 'गुरवे सर्वलोकानां भिषजे भवरोगिणाम्। निधये सर्वविद्यानां दक्षिणामूर्तये नमः।' इति परमप्राचीनद्व-यपद्ये द्वितीयपादेन 'भिषक्तमं त्वां भिषजां शृणोमि' प्रथमो दैव्यो भिषक्' इत्यादि श्रुत्यनुसारेण भवरोगिमहाभिषक्त्वेन भगवान् ज्ञानचन्द्रकलाचूडः ब्रह्मविद्याधिदै-वतोमार्धविग्रहः सर्वज्ञः परमकारुणिकः परमेश्वरः विनिर्दिष्टः। प्रथमपादेन च

"स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इत्यादियोगसूत्राद्यनुसारेण भवरोगमहाभिषक्त्वोचितेन भवरोगनिदाननाशनोन्मूलकज्ञानमहौषधप्रदातृत्वरूपेण सर्वलोकगुरुत्वेन स एव विनिर्दिष्टः। तृतीयपादेन च "ईशानस्सर्वविद्यानां" इत्यादिश्रुत्यनुसारेण विविधकर्मपरिपाकायत्तविविधचित्तावस्थाशालिनामत एव दृढत्वशैथिल्याधिक्यन्यूनत्वादिभेदेन भवरोगं तारतम्येनानुभवतां सर्वेषां भवरोगिणामेकरूपचिकित्सायाः करणायोगेन सर्वभवरोगिचिकित्सकत्वोचितेन सर्वेषामपि भवरोगाऽऽत्यन्तिकनिवृत्तिहेतुभूतज्ञानमहौषधपानयोग्यतापादकतत्पूर्वानुष्ठेयबहुविधभवरोगितत्तदवस्थोचितनानाविधसाधनभेदरूपनानाविधावान्तरौषधविशेषबोधकनानामतमूलभूतनानाविद्यास्वरूपभवरोगचिकित्साशास्त्रभेदप्रवर्तकत्वरूपेण सर्वविद्यानिधित्वेन च स एव विनिर्दिष्टः। एवञ्च सर्वेषामपि भवरोगिजनाननुद्दिधीर्षया भगवता दक्षिणामूर्तिरूपेण परमेश्वरेण साक्षात् परंपरया च प्रवर्तितासु भवरोगचिकित्साशास्त्ररूपासु आचारध्यायनतन्त्रमाश्रुतिशिरस्सिद्धान्तं उच्चावचभेदभिन्नासु तत्तन्मतावलम्बिभिरादृतासु परस्परविलक्षणत्वेऽपि साक्षात् परंपरया वा परमपुरुषार्थैकप्रयोजनिकासु सर्वास्वपि विद्यासु कस्य अपि नाप्रामाण्यगन्धोऽपि। अपि तु अधिकारिपुरुषभेदेन एकस्याप्यधिकारिणः चित्तशुद्धितारतम्याधीनावस्थाभेदेन सोपानारोहणन्यायेन भूमिकाक्रमेण च प्रामाण्यमेवेति स्कान्दमहापुराणान्तर्गतसूतसंहितायां यज्ञवैभवखण्डे सर्वमार्गप्रामाण्यनिरूपणावसरे—

"तानि मानानि कथितानि मनीषिभिः। अधिकारिविभेदेन नैकस्यैव सदा द्विजाः॥ तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः" इति, 'सोपानक्रमतो देवाः वेदमार्गस्य हेतवः' इति, 'अतोऽधिकारिभेदेन मार्गा मानं न संशयः' इति, 'तस्मादुक्तेन मार्गेण शिवेन कथिता अमी। मार्गा मानं न चेन्मानं मृषावादी कथं शिवः॥ महाकारुणिको देवः सर्वज्ञो निर्मलः खलु।' इति चैवमादिना असंदिग्धमुपपादितं लोकानुग्रहैकप्रयोजनाय कृतशरीरपरिग्रहेण भगवता द्वैपायनेन महर्षिप्रवरेण।

"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः" इति महाभारतेऽपि तेनैव सांख्याद्युपलक्षितसर्वमार्गप्रामाण्यमुप-

क्षिप्तम्। तत्तत्पुराणादिगता तन्त्रनिन्दापि न तन्त्राप्रामाण्यतात्पर्येण, अपि तु तन्त्राधिकारिभिन्नाधिकारिणां तन्त्रप्रवृत्तिनिरासतात्पर्येणेति कथितं साम्बपुराणे "निन्दा स्मृतिपुराणेषु या तन्त्रविषयानघ। अपेक्ष्य वेदमार्गार्हं प्रवृत्ता सा न संशयः ॥" इति। बहुभिश्च पूर्वाचार्यैः परमार्थविद्भिः सर्वेषामपि मतानां प्रामाण्यं प्रसाधितं तत्र तत्र ग्रन्थेषु। विस्तरभिया न लिख्यते ॥

अथ पूर्वं प्रतिज्ञातविषयचतुष्टये द्वितीयं सर्वेषामपि मतानामन्योन्यमविरुद्धत्वमपि संग्रहेण निरूप्यते। सूतसंहितायामेव भगवता बादरायणेन "यथा तोयप्रवाहाणां समुद्रः परमावधिः। तथैव सर्वमार्गाणां साक्षान्निष्ठा महेश्वरः" ॥ इति ॥, "वेदास्सर्वे पुराणानि स्मृतयो भारतं तथा। अन्यान्यपि च शास्त्राणि तथा तर्काश्च सर्वशः ॥ शैवागमाश्च विविधा आगमा वैष्णवा अपि। अन्यागमाश्च विदुषामनुभूतिस्तथैव च ॥ अस्मिन्नर्थे स्वसंवेद्ये पर्यवस्यन्ति नान्यथा। बाध्यबाधकतां यान्ति व्यवहारे परस्परम् ॥ समुद्र इव कल्लोला इति वेदार्थसंग्रहः ॥" इति चैवमादिना अविवक्षिते तत्तन्मतप्रतिपादितोपायरूपे व्यावहारिकप्रपञ्चे मतानां परस्परं वैमत्येऽपि विवक्षिते उपेये पारमार्थिके सर्वमतनिष्ठाभूते आत्मतत्त्वे सर्वेषामपि मतानां पर्यवसानेन ऐकमत्यात् लक्ष्यैक्येन सर्वमतानां मिथोऽविरुद्धत्वमुद्घोषितम्। भगवता पराशरेणापि पराशरपुराणे—

"शास्त्रमापाततो भाति मुने बहुमुखं नृणां। निरूपितन्तु न्यायेन विभात्येकमुखं पुनः ॥" इत्यादिना उपायांशमादाय शास्त्रस्य बहुमुखत्वेऽपि उपेयांशमादायैकमुखत्वमुक्तम्। अत्र शास्त्रमापाततो बहुमुखं निरूपितन्तु एकमुखमित्यस्य चायमर्थः, आपाततः तात्पर्यविषयोपेयापरामर्शेन आपातदृष्ट्या तात्पर्याविषयोपायमात्रपरामर्शि शास्त्रं बहुमुखं परस्परविरुद्धनानार्थबोधकं, निरूपितन्तु तात्पर्यविषयोपेयपरामर्शेन तत्त्वदृष्ट्या निर्धारितन्तु, एकमुखं एकस्यैव परस्पराविरुद्धस्य आत्मतत्त्वरूपार्थस्य बोधकमिति ॥ यतिधर्मप्रबोधेऽपि श्रीनीलकण्ठयतीन्द्रैरुक्तम् "शास्त्रमज्ञस्य बहुधा विभात्येकं विवेकिनः। मेय एकत्र द्रष्टारो भिद्यन्ते तत्र भिद्यते ॥" इति।

"बहुधाप्यागमैर्भिन्नाः पन्थानस्सिद्धिहेतवः । त्वय्येव निपतन्त्योघाः जाह्नवीया इवार्णवे ॥" इति कविकुलतिलकेन कालिदासेन,

"त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥"

इति गन्धर्वराजेन पुष्पदन्तेन,

"नानाविधैरागममार्गभेदैरादिश्यमाना बहवोऽभ्युपायाः ।
एकत्र ते श्रेयसि संपतन्ति सिन्धौ प्रवाहा इव जाह्नवीयाः ॥" इति न्यायमञ्जर्यां जयन्तभट्टेनच सर्वमार्गाणामेकत्र लक्ष्ये पर्यवसानं सोदाहरणमुपवर्णितम् । 'शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते' इति भगवता भर्तृहरिणा,

"तस्मादात्मज्ञानं सन्तो मोक्षप्राप्तौ हेतुं प्राहुः ।
तीर्थे तीर्थे तत्त्वाचार्यैस्तैरुक्तं संज्ञाभेदैः ॥"

इति जयन्तभट्टेन च, शास्त्रेषु परस्परं प्रतिपादनप्रक्रियाभेद एव न तु प्रतिपाद्यभेदः इति, प्रतिपाद्यस्यापि संज्ञाभेदमात्रं नत्विभेदः इति चोक्तम् । तत्त्वचन्द्रिकायामुमामहेश्वरशास्त्रिभिः उदाहृतैः —

"कणादकपिलाद्यैस्तु मुनीन्द्रैरपि कीर्तितम् ।
मन्दबुद्ध्यनुसारेण केवलं परिकीर्तितम ॥
अत एव मुनीनान्तु विरोधो नास्ति कश्चन ।
अन्यथा ते विरुद्धार्थं कथं ब्रूयुर्मनीषिणः ॥
ब्रह्मविष्णुमहादेवप्रमुखैः परिकीर्तिताः ।
आगमाश्चानया नेया दिशा नैवाऽन्यथा बुधाः ॥
अन्यथा ते तु नेयाश्चेत विरुद्धार्थविभाषिणः ।
अत एव न कस्यापि विरोधो ह्यस्ति कश्चन ।
स्वतन्त्रा आगमास्सर्वे निर्मलैः परिकीर्तिताः ॥

अधिकारिविशेषेण प्रवृत्ता न हि संशयः ।"

इत्यादिमानवपुराणवचनैरपि सर्वमार्गाणामविरुद्धत्वं सर्वमार्गप्रवर्तकानामभ्रान्तत्वञ्च स्फुटीकृतम् । भगवत्पादैरपि "वेदान्तवाक्यमीमांसा तदविरोधतर्कोपकरणा' इति 'तान्यपि(तर्कस्मरणानि)तर्कोपपत्तिभ्यां तत्वज्ञानायोपकुर्वन्तीति चेदुपकुर्वन्तु नाम' इति चैवमादिवचनैः तर्कादिसमयानां न केवलमविरोधित्वमपि तु वेदान्तोपकारकत्वमपीति कीर्तितम् । 'अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिपूक्तास्तर्का'' इति तर्कपदं विवृण्वता श्रीवाचस्पतिमिश्रेण तत्वज्ञानोपकारकन्यायादिशास्त्रगततर्कस्वरूपं प्रकाशितम् । कल्पतर्वादिषु ग्रन्थेषु तर्कादिसमयानामुपकारकत्वं स्फुटं विशदीकृतम् । सर्वदर्शनावलम्बिभिरपि सविशेषपुरस्कृतैः षड्दर्शिनीटीकाकारैस्सर्वदर्शनतात्पर्यविद्भिः श्रीवाचस्पतिमिश्रैरपि योगप्रत्युक्त्यधिकरणे 'नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते, किं तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहङ्कारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते,नचैतावतैषामप्रामाण्यं भवितुमर्हति । यत्पराणि हि तानि तत्रप्रामाण्ये अप्रामाण्यमश्नुवीरन् । नचैतानि प्रधानादिसद्भावपराणि किं तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि, तच्च किंचिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम्, पुराणेष्विव सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितं तत्प्रतिपादनपरेषु, न तु तद्विवक्षितम्' इत्यादिवचनैः योगोपलक्षितसर्वसमयानां विवक्षिताविवक्षितविषयद्वयोपन्यासपूर्वकमविवक्षिते वेदान्तविरुद्धे अप्रामाण्यस्य विवक्षिते वेदान्ताविरुद्धे प्रामाण्यस्य च निरूपणेन विवक्षितांशमादाय सर्वमताविरोधः स्फुटं प्रत्यपादि । 'यदर्थः सर्वशास्त्रारम्भः' इति बृहदारण्यकभाष्यवाक्यव्याख्यानरूपैः—

यदर्थं सर्वशास्त्राणां प्रवृत्तिरतिविस्तरा ।
आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्यमः ॥
संसारोच्छेदमेवामी फलं शास्त्रकृतोऽब्रुवन् ।
स्वत एव मनुष्याणां प्रवृत्तिर्भोगसिद्धये ॥
तत्रानुवादि शास्त्रं स्यात निवृत्तावेव तन्मितिः ।
विरोधस्सर्वशास्त्रेषु पदार्थानां व्यवस्थितौ ॥

युक्तस्तात्पर्यहीनत्वाच्छ्रुतौ सृष्टिविगानवत् ।
अपि वात्स्यायानादीनां शास्त्राणां द्वारभेदतः ॥
प्रामाण्यमविरुद्धं स्यात् ऐकात्म्यज्ञानजन्मने ।
प्रवर्तमानः कामेषु शास्त्रदीपितवर्त्मना ॥
दुर्लभत्वादिकान्दोषान् दृष्ट्वाऽतो विनिवर्तते ।
अनित्यदुःखशून्यत्वं पदार्थानां स्फुटं ब्रुवन् ॥
बुद्धोऽपि रागाद्युच्छित्तौ यतते नात्मनिह्नुतौ ।"

इत्यादिभिः वार्तिककृतत्सारवचनैः सर्वमतसारसम्यं सारस्येन वर्णितम् । भगवत्पादैरेव सर्ववेदान्तसिद्धान्तसारसंग्रहाख्ये प्रकरणे—

"जीवन्मुक्तिपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तित्वं पवनोऽस्पन्दतामिव ॥
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरं ।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदाञ्च यत् ॥
विज्ञानं विज्ञानविदां मलनाञ्च मलात्मकं ।
पुरुषस्सांख्यदृष्टीनामीश्वरो योगवादिनां ॥
शिवश्शैवागमस्थानां कालः कालैकवादिनां ।
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥
यत्सर्वं सर्वगं वस्तु तत्त तदत्वसौ स्थितः ।"

इत्यादिना स्फुटीकृतमेतत् । तन्त्रसिद्धान्तवेदान्तोभयमर्मविद्भिः श्रीभास्कररायैरपि सेतुबन्धत्रिपुरामहोपनिषद्भाष्यादिषु तत्तद्विद्याप्रशंसकानां तन्निन्दकानाञ्च बहूनां मृतिपुराणादिगतवचनानामभिप्रायवर्णनपूर्वकं सर्वेषामपि मतानामधरोत्तरभूमिकारूपत्वेनाविरोधित्वमुपपादितं । अधिकारानुगुण्येन भूमिकाभेदानां प्रकाशनाप्रकाशने च कर्तव्यतया निरूपिते । पूर्वभूमिकाधिरूढानमुत्तरभूमिकाधिकारिणामुत्तर भूमिकाया अप्रकाशने संप्रदायविच्छेदापत्तेः, पूर्वभूमिकायामनधिरूढानामुत्तरभूमिकानधिकारिणामुत्तरभूमिकाप्रकाशने तेषामुभयभ्रष्टत्वापत्तेश्च । तदीयानिचेमानि वाक्यानि "जगदाप्तपरमशिवप्रणीतत्वाविशेषेण सर्वासां विद्यानां अधिकारिभेदेन

प्रामाण्यमेवेति स्पष्टं सूतसंहितादौ। अधिकारश्च यथा नास्तिकानामेव आर्हतादि-दर्शनेषु, त्रैवर्णिकादेरेव वैदिकमार्गेष्विति पुरुषभेदेनैव व्यवस्थितः, तथा एकस्यापि पुरुषस्य चित्तशुद्धितारतम्यादपि स व्यवस्थितः। वर्णभेदेनेव आश्रमभेदेनापि धर्म व्यवस्थादर्शनात्। एवञ्च यानि तत्तद्विद्याप्रशंसकानि वचनानि तानि तत्तदधिकारिणं प्रत्येव प्रवर्तकानि, यानि च तन्निन्दकानि तानि तत्तदनधिकारिणं प्रति निवर्तकानि, न पुनर्नहि निन्दान्यायेन विधेयस्तावकानि, अतिबाल्यदशायां बालक्रीडनके प्रवर्तयतामेव पित्रादीनां तस्यैवाध्ययनाधिकारे तादृशक्रीडायां ताडनकर्तृत्व दर्शनात्। तदयं मथितोऽर्थः, जातमात्रस्य त्रैवर्णिकस्य पुरुषस्य क्रीडाधिकारे निवृत्ते अक्षराभ्यासः, ततः छन्दोभाषज्ञानार्थं काव्याध्ययने प्रवर्तकानि 'अदोषं गुणवत्काव्यम्' इत्यादीन्यग्निपुराणवचनानि, व्युत्पन्नस्य तु "काव्यालापांश्च वर्जयेत्" इति निषेधः। काव्याध्ययनजन्यप्रयोजनस्य जातत्वेन उत्तरभूमि-कायामेवाधिकारात् तां विहाय पूर्वभूमिकायामेव आयुः क्षपयतोऽनिष्टं भवतीति तदर्थः। ततो देहातिरिक्तत्वेनात्मनो ज्ञानार्थं न्यायशास्त्राध्ययने विधिः "शुङ्गेनात्मानमन्विच्छ" इत्यादिः। शुङ्गं हेतुरवयवसमुदायात्मकन्याय इति यावत्, देहादिभिन्नत्वेन आमुष्मिकयातायातक्षमतया आत्मनि ज्ञाते तु तादृशफलकर्मस्वधिकारात् "आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थिकाम्" इत्यादयो निषेधाः पूर्वभूमिकां निषेधन्ति। "धर्ममेवाचरेत् प्राज्ञः" इत्यादि विधयः उत्तरभूमिकायां प्रवर्तयन्ति, तदुपयोगित्वेन पूर्वमीमांसायाः वेदे कर्मकाण्डस्य चाध्ययनम्। तेन धर्मार्थकामेषु साधितेषु चतुर्थपुरुषार्थलिप्सया पूर्वभूमिकात्यागाय "नास्त्यकृत कृतेन" इति कर्मनिन्दा। अथ "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादयो विधयः उत्तरभूमिकाप्रवर्तकाः। तदुपयोगि-तया च वेदे उपनिषत्काण्डस्य उत्तरमीमांसायाश्चाध्ययनम्। ब्रह्मज्ञानञ्च द्विविधं शाब्दं अपरोक्षानुभवरूपञ्च,

"शास्त्रदृष्टिर्गुरोर्वाक्यं तृतीयस्त्वात्मनिश्चयः।
अन्तर्गतं तमश्छेत्तुं शाब्दबोधो न हि क्षमः॥"

इत्यादिज्ञापकात्। तेन शाब्दभूमिकालाभोत्तरं तत्रायुः क्षपणनिषेधार्थाः 'पाण्डि-

त्यं निर्विद्य बाल्येन तिष्ठासेत' इत्यादयः। कर्मभूमिका ग अनन्तरमपरोक्षानुभवरूपभूमिकातः प्राक्च भक्तिरूपा एका बह्ववान्तरभूमिकाभेदोपेता महती भूमिका। तदुपयोगित्वेन भक्तिमीमांसाध्ययनं। भक्तिश्च अपरोक्षज्ञानभूमिकान्तमनुवर्तते। तल्लाभोत्तरमपरोक्षानुभवरूपभूमिकालाभः। सैव च जीवन्मुक्तिः। तदव्यवहितोत्तरमेव च विदेहकैवल्यम्। न्यायादिशास्त्रेषु स्वस्वभूमिकालाभमात्रेण मोक्षप्राप्तिवर्णनं तु उत्तरोत्तरभूमिकानामपन्हवेनैव। पुरुषार्थप्राप्तौ विलम्बशङ्कया प्रवृत्त्यभावनिरासेन तस्यादोषत्वात्। यानि च 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'यमेवैष वृणुते तेन लभ्यः इत्यादीनि कर्मभक्तिमात्रयोस्साधनत्वप्रतिपादकवचनानि तेष्वेवकारः स्वस्वभूमिकासाध्ये उत्तरभूमिकाधिकाररूपफले साधनान्तरनिरासार्थः, न पुनः उत्तरभूमिकाभावबोधकः। 'ज्ञानदेव तु कैवल्यमि' त्यत्र तु अनुभवात् परस्तत्साधनान्तररूपाया भूमिकायाः अभावात् तदभावबोधक एव इति सर्वेषां तत्तद्विद्याप्रवर्तकानां ऋषीणां न मिथो विरोधः' इति, 'उत्तरभूमिकाधिरूढैरपि पूर्वभूमिकाया अनिरासेन समर्थनं स्वभूमिकाया अप्रकाशनञ्चावश्यं कार्यं अन्यथा पूर्वभूमिकाधिकारिणां चित्तपाकविशेषमन्तरेण उत्तरभूमिकायां विश्वासानुदयात् निरसनयुक्तिभिः स्वकीयपूर्वभूमिकायामविश्वासाच्चोमयभ्रष्टतापत्तेः। एतदभिप्रायेणैव 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः' इति विधिनिषेधातीतानामपि जीवन्मुक्तानां 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि' इति विधिः 'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनां' इति निषेधश्च भगवद्गीतासु दृश्यते' इति च॥

भगवत्पादैरपि 'न हि न हि रक्षति डुकृञ्करणे' इति 'वृथा कण्ठक्षोभं वहसि सहसा' तर्कवचसा' इति च उत्तर भूमिकाधिरूढेम व्याकरणतर्कादिशास्त्र एव आयुःक्षपणं विनिन्दितम्। श्रीमद्दीक्षितेन्द्रैरपि—

'यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता॥'

इति वार्तिकवचनानुरोधेन एकैव भगवत्पाददिव्यसूक्तिरधिकारिभेदेन पूर्वाचार्यानुपेत्य सहस्रधा अधिगतभिदा, तथापि ब्रह्माद्वयैकपरायणेति, आत्मैक्यसिद्धौ परं

सन्नह्यद्भिः प्राचीनैरात्मैक्यसिद्ध्युपायेषु व्यवहारसिद्धविषयेष्वधिकारिभेदानुरोधे नानादरात् नानाविधाः सरणयो दर्शिता इति च, सिद्धान्तलेशसंग्रहप्रमुखे कथितम् । 'अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमाने विगानं क्वचिदपि न दोषः, यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानायां तत्तत्प्राच्योदीच्यादिक्षत्ररूपायां स्थूलारुन्धत्यां, यथा वा रेखागवयन्यायेन नित्यशब्दप्रतिपत्त्युपायतया नानाव्याकरणैः परस्परभिन्नप्रकृतिप्रत्ययविभागेन कल्पिते कृत्रिमशब्दे' इति च परिमले तैरेवोक्तम् । युज्यते च तत् । विवक्षितवस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकारप्रदर्शनमाचार्याणां न दोषाय भवति किंतु अलङ्कारायैव भवति । प्रतिपत्तॄणां प्रज्ञावैचित्र्येण कस्यचित्प्रतिपत्तुः केनचित्प्रकारेण मुक्तिसाधनब्रह्मात्मैक्यज्ञानलाभात् । एवमियता प्रबन्धेन सर्वेषामेव मतानां मिथोऽविरोधित्वं उक्तम् ॥

अथ प्रतिज्ञातविषयचतुष्टये तृतीयं मतान्तराणां भगवत्पादमतविप्रकृष्टत्वं मध्वरामानुजश्रीकण्ठमतत्रयस्य तत्सन्निकृष्टत्वञ्च निरूप्यते । भगवत्पादैरेव हि 'स च(प्रधानवादः) कार्यकारणानन्यत्वाभ्युपगमात्' प्रत्युपन्नो वेदान्तवादस्य इति, 'वैदिकस्य च दर्शनस्य प्रत्यासन्नत्वात्' इति च वाक्येन प्रधानवादः कार्यकारणानन्यत्वसत्कार्यत्वात्मासङ्गत्वस्वप्रकाशत्वाद्यंशैः वेदान्तवादप्रत्यासन्नः, न तथा परमाण्वादिवादः इति कस्यचिन्मतस्य प्रत्यासन्नत्वं कस्यचिद्विप्रकृष्टत्वञ्च व्यवहृतम् संक्षेपशारीरकेऽपि—

> विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः ।
> व्यवस्थितेऽस्मिन्परिणामवादे स्वयं समायाति विवर्तवादः ॥

'प्रत्यासन्ना परिणतिरियं विप्रकृष्टस्तु पूर्वः संघातादिस्सकल उदितो वेदसिद्धान्तसिद्धेः ।' इत्यादिना केवलभेदगर्भारम्भवादाद्यपेक्षया भेदाभेदगर्भपरिणामवादस्य केवलाभेदगर्भविवर्तवादात्मकवेदान्तवादप्रत्यासन्नत्वं व्यवहृतम् । एवं पूर्वाचार्यप्रदर्शितमार्गेणैव मध्वादिमतत्रयस्यापि भगवत्पादमतप्रत्यासन्नत्वं तदितरमतानां तद्विप्रकृष्टत्वञ्चाभ्यूहितुमुचितमेव । तदेतत्संक्षेपेण प्रदर्श्यते ।

पूर्वोक्तप्रकारेण वात्स्यायनीयादीनां सर्वेषामपि मार्गाणामधिकारिभेदेन प्रामाण्ये सिद्धेपि

'वेदमार्गजनितन्तु वेदनं दोषहीनमतिशोभनं सदा ।
अन्यमार्गजनितं विचारतो वेदमार्गरुचिकारणं क्रमात् ॥' इति,
'तथा वेदसमं मानं नास्ति तत्र न संशयः ।' इति,
'तत्प्रसादात् क्रमात् मार्गान्विशिष्टानेति मानवः ।
तत्र तत्र स्थितो देवः प्रसादं कुरुतेऽस्य तु ॥
सोपानक्रमतो देवा वेदमार्गस्य हेतवः ।
वेदमार्गस्थितो देवः साक्षान्मुक्तेस्तु कारणम् ॥
तत्रापि कर्मभागस्थः ज्ञानश्रद्धाप्रदो हरः ।
ज्ञानमार्गस्थितश्शम्भुः ज्ञानश्रद्धाप्रदो हरः ॥
अतो वेदस्थितो मर्त्यो नान्यमार्गं समाश्रयेत् ।
वेदमार्गैकनिष्ठानां न किञ्चिदपि दुर्लभम् ॥' इति,
'तथापि वेदो मार्गाणामुत्तमस्सर्वसाधकः'

इति चैवमादिसूतसंहितावचनैः

'किं बहूक्त्या वेदमार्गसौधसंप्राप्तये नृणां ।
दृढनिश्रेणिकापर्वाण्येव तन्त्राणि सर्वथा ॥
निश्रेणिकापर्वरूपमार्गाणामुच्चनीचता ।
विशिष्टधर्मकथनव्याजेन करुणाबलात् ॥
ऋषिभ्यः काववेयेभ्यः कुमारेण प्रकीर्तिता ।'

इत्यादिना पुरुषार्थप्रबोधगतेन ब्रह्मानन्दभारतीवचनेन च सर्वमार्गोत्तमत्वं सर्वप्राप्यत्वं सर्वोत्तमाधिकारिकत्वञ्च अपौरुषेय्याः श्रुतेरेव, तत्रापि श्रुतिशिरोभूताया उपनिषद एव चेति, निर्विवादमास्तिकोत्तमानां वैदिकानां सर्वेषामपि । मुक्तिसौधारोहणसाधनीभूतनिश्रेणिकाचरमपर्वरूपाणाञ्चोपनिषदां तात्पर्यनिर्णायकब्रह्मसूत्रविवरणरूपत्वेन च मतान्तरेभ्यः मध्वादिमतत्रयम्

भगवत्पादमतप्रत्यासन्नं । तत्प्रत्यासत्तौ हेत्वन्तराण्यपि प्रदर्श्यन्ते । वेदप्रामाण्याभ्युपगन्तृत्वात् तावत् तदनभ्युपगन्तृनास्तिकदर्शनेभ्यः प्रत्यासत्तिः । तत्रापि देहेन्द्रियाद्यतिरिक्तात्माभ्युपगमात् देहेन्द्रियाद्यात्मत्ववादिचार्वाकदर्शनात्, स्थिरसद्रूपात्माभ्युपगमात् क्षणिकशून्यात्मवादिबौद्धदर्शनात्, अपरिणाम्यात्माभ्युपगमात् शरीरानुसारिसंकोचविकासशालिपरिणाम्यात्मवादिजैनदर्शनात्, प्रमाणानां स्वतः प्रमाण्याभ्युपगमात् स्वतोऽप्रामाण्यवादिबौद्धपरतःप्रामाण्यवादिनैयायिकादिदर्शनेभ्यः, श्रुत्यवष्टम्भेन जगन्मूलकारणव्यवस्थापनात् अनुमानावष्टम्भेन तद्व्यवस्थापकसर्वतार्किकदर्शनेभ्यः, ईश्वराभ्युपगमात् निरीश्वरवादिसांख्यमीमांसकादिदर्शनेभ्यः, ईश्वरस्य जगन्निमित्तकारणत्वस्य स्पष्टमुपवर्णनात् ईश्वरमभ्युपगम्य तस्य केवलनिमित्तकारणत्वप्रतिफलनक्लृप्तैश्वर्यवर्णनेऽपि कण्ठोक्त्या निमित्तकारणत्वबोधकपातञ्जलदर्शनात्, कर्मसापेक्षेश्वराभ्युपगमात् तन्निरपेक्षस्वतन्त्रेश्वरवादिपाशुपतादिदर्शनेभ्यः, मोक्षे सुखाविर्भावाभ्युपगमात् दुःखनिवृत्तिमात्राभ्युपगन्तृनैयायिकवैशेषिकसांख्यपातञ्जलप्राभाकरादिदर्शनेभ्यः, जीवस्य चिन्मात्रत्वाभ्युपगमात् तस्य केवलजडत्वजडबोधात्मकत्वाभ्युपगन्तृनैयायिकभाट्टादिदर्शनेभ्यः, जीवस्य स्वप्रकाशत्वप्रत्यक्षत्वाभ्युपगमात् तस्य परप्रकाश्यत्ववादिनैयायिकानुमेयत्ववादिसांख्यभाट्टादिदर्शनेभ्यः, जीवस्य आनन्दरूपत्वाभ्युपगमात् तदनभ्युपगन्तृनैयायिकपातञ्जलादिदर्शनेभ्यः, जीवस्य कर्तृभोक्तृरूपत्वाभ्युपगमात् केवलभोक्तृरूपत्वाभ्युपगन्तृसांख्यादिदर्शनेभ्यः, जगतः प्रकृतिपरिणामत्वेन तदंशे परिणामवादाभ्युपगमात् संघातवादारम्भवादाभ्युपगन्तृबौद्धनैयायिकादिदर्शनेभ्यः, सत्कार्यवादाभ्युपगमात् असत्कार्यवादिनैयायिकादिदर्शनेभ्यः कार्यकारणानन्यत्वाभ्युपगमात् तद्भेदवादि नैयायिकादिदर्शनेभ्यः, कार्यकारणभावाभ्युपगमात् स्वभाववादिदर्शनात्, जगतः अक्षणिकत्वातुच्छत्वाभ्युपगमात् क्षणिकत्वातुच्छत्वाभ्युपगन्तृबौद्धदर्शनात्, स्फोटवादनिराकरणात् स्फोटवादिवैयाकरणमतात्, ऐकभविकवादानभ्युपगमात् तद्वादिमीमांसकविशेषदर्शनात्। पारमार्थिकभेदाभेदानभ्युपगमात् तदभ्युपगन्तृभास्करयादवप्रकाशादिदर्शनात्, ब्रह्मणः सावयवत्वपरिणामित्वाद्यनभ्युपगमात् तदभ्युपगमाततदभ्युपगन्तृवृत्तिकारभर्तृप्रपञ्चादिदर्शनेभ्यः, पदानां कार्यव्युत्पत्तिनियमानभ्युपगमात् तदभ्युपगन्तृप्राभाकरदर्श-

नाच्च मध्वादिमतत्रयं भगवत्पादमतप्रत्यासन्नम् । इत्थमेव हेत्वन्तरैरपि मध्वादिमतत्रयस्य सामान्येन भगवत्पादमतप्रत्यासत्तिरूह्या । विस्तरभिया न लिख्यते ॥

अथ विशिष्यापि मध्वादिमतानां भगवत्पादमतप्रत्यासत्तिः निरूप्यते । मध्वमते तावत् अन्तःकरणगतस्य दुःखित्वादिबन्धस्य सत्यत्वाभ्युपगमेऽपि भगवत्पादमत इव जीवगतस्य तस्य मिथ्यात्वमभ्युपगतम् । मध्वमते धर्मधर्मिणोर्विशेषरूपभेदप्रतिनिधेरङ्गीकारेऽपि भेदनिराकरणेन ब्रह्मणः जीवव्यावर्तकस्वभिन्नधर्मराहित्यरूपं निर्धर्मकत्वं भगवत्पादमत इव अभ्युपगतं । किं च मध्वमतेऽपि भगवत्पादमत इव शारीरकशास्त्रे विचार्यस्य मुमुक्षुज्ञेयब्रह्मणः नोपास्यत्वं, अपि तु तस्य तद्बिम्बस्यैवोपास्यत्वमित्युक्तम् । बिम्बप्रतिबिम्बभेदाभ्युपगमेऽपि जीवस्य ब्रह्मप्रतिबिम्बत्वञ्च भगवत्पादमत इव व्यवहृतं । संसारदशायां स्वरूपानन्दावारकानादिभावरूपाज्ञानमपि भगवत्पादमत इव ज्ञाननिवर्त्यत्वेनाभ्युपगतम्, परं तु तस्य सत्यत्वमभ्युपगतमिति एतावानेव विशेषः । एतेषाञ्च भगवत्पादाभिमतस्य जीवब्रह्माभेदस्य अर्थात् सूचकानां मध्वमते व्यवस्थापनात् मध्वमतं भगवत्पादमतप्रत्यासन्नम् ।

एवं रामानुजमतमपि विशिष्य भगवत्पादमतप्रत्यासन्नं । रामानुजमते हि बाह्यप्रकाशनिवर्त्यस्य बाह्यतमसः भावरूपत्वं साधितं, तच्चान्तरज्ञानरूपप्रकाशनिवर्त्यस्य भावरूपज्ञानस्यान्तरतमसः दृष्टान्तरूपमद्वैत्यभिमतभावरूपाज्ञानसिद्ध्यनुकूलं । एवं मध्वरामानुजमतयोः मुक्तौ जीवस्य ब्रह्मानन्दानुभवो वर्णितः, तदपि अद्वैत्यभिमतजीवब्रह्माभेदस्य अर्थात् सूचकम् । जीवब्रह्मणोर्भेदे हि न ब्रह्मानन्दो जीवस्य पुरुषार्थो भवितुमर्हति, अन्यानन्दस्य अन्यं प्रति अपुरुषार्थत्वात्, न वा ब्रह्मानन्दः जीवस्य अपरोक्षीभवितुमर्हति, अन्यानन्दस्य अन्यं प्रति परोक्षत्वात् । किंच रामानुजश्रीकण्ठमतयोः भगवत्पादमत इव ब्रह्मणः जगत्प्रति अभिन्ननिमित्तोपादानत्वमभ्युपगतम् । भगवत्पादाभिमतस्य अद्वैतस्य विशिष्टरूपेणापि कथंचित् समर्थनं कृतं । ततश्च रामानुजश्रीकण्ठमतयोः भगवत्पादमतप्रत्यासन्नत्वम् ।

एवं श्रीकण्ठमतमपि विशिष्य भगवत्पादमतप्रत्यासन्नं । यद्यपि श्रीकण्ठमते प्रायशः रामानुजमतवदेव स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्म कार्यं सूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म कारणमिति कार्यकारणोभयावस्थब्रह्मणः विशिष्टाद्वैतरूपत्वं ब्रह्मप्रपञ्चयोः शरीरशरीरिभावः, ब्रह्मणः सविशेषत्वं, प्रपञ्चसत्यत्वं, जीवाणुत्वं, अर्चिरादिना मार्गेण लोकान्तरस्थपरब्रह्मप्राप्तिपूर्वकतत्सादृश्यावाप्तिरूपमुक्तिरित्यादिप्रमेयनिरूपणं कृतं, तथापि रामानुजमतात् श्रीकण्ठमतेऽद्वैतमतप्रत्यासत्तिगमको विशेषो वर्तते । तथाहि, रामानुजमते हि प्रकृतिरूपा जडशक्तिरेव चिदचिद्रूपप्रपञ्चात्मना परिणमते न तु ब्रह्मणः धर्मज्ञानरूपा चिच्छक्तिः तथा परिणमते, सा च ब्रह्मणश्चिच्छक्तिः ब्रह्मणस्सकाशात् भिन्ना ब्रह्मणो गुणगणात्मिका च । ब्रह्मतदीयचिच्छक्तिभ्यां भिन्ना जडभिन्ना च शुद्धसत्त्वशब्दिता नित्यविभूतिः ब्रह्मणः अनन्तविष्वक्सेनगरुडादीनां नित्यानां मुक्तानाञ्च भोग्यभोगोपकरणभोगस्थानशरीरादिरूपविविधपदार्थाकारा भवति । ब्रह्ममहीषी महालक्ष्मीस्तु ब्रह्मतदीयचिच्छक्तिनित्यविभूतिभ्यो भिन्ना स्वतन्त्रचेतनान्तररूपा जीवकोट्यन्तर्गता, तथापि विभुत्वादणुस्वरूपजीवान्तरविलक्षणा, अथवा विभुत्वादीश्वरपारतन्त्र्याच्च पतिपुत्रवत्यावृत्तपत्नीन्यायेन जीवेश्वरविलक्षणा, अथवा नित्यलीलाख्यविभूतिद्वयशेषित्वादि-
त्रेण [illegible] भगवत्तुल्यत्वात् ईश्वरकोट्यन्तर्गता स्वस्वेतरसर्वशेषिभगवच्छेषभूता जगत्कारणत्वादिब्रह्मलक्षणशून्या च । महालक्ष्म्याः ब्रह्मशक्तित्वादिवादाः पत्नीत्वादिरूपणे ब्रह्मविशेषणत्वाभिप्रायाः । न तु महालक्ष्म्याः ब्रह्मत्वं वा तच्छक्तिरूपत्वं वा, इत्यभ्युपगम्यते । श्रीकण्ठमते तु न तथाभ्युपगम्यते । किं तु सकलजगत्कर्तुः परमेश्वरस्य धर्मज्ञानरूपा चिच्छक्तिरेव केनचिदंशेन प्रथमं नारायणात्मना परिणता सती तद्द्वारा पश्चात् चिदचिद्रूपप्रपञ्चात्मना परिणमते । अत एव नारायणस्योपादानत्वव्यवहारः श्रुतिषु, अचित्प्रपञ्चस्य स्वरूपान्यथाभावरूपा उत्पत्तिः, चित्प्रपञ्चस्य तु नारायणांशभूतस्य धर्मज्ञानसंकोचविकासरूपैव उत्पत्तिः, न तु स्वरूपान्यथाभावः, चित्प्रपञ्चस्य मुक्तिभाक्त्वेन नित्यतत्वात्
सा चिच्छक्तिरेव परब्रह्मशिवस्य ज्ञानेच्छाकृतिबलतेजःप्रभृतिगुणरूपेण शरीरेन्द्रियमनःप्राणरूपेण विविधभोगस्थानोपकरणरूपेण सह भोक्तुः

दिव्यमहिषीरूपेण च परमेश्वरमासेवते। स्वयमपि ज्ञानेच्छादिरूपैरुक्तैस्सर्वैरप्युपेता नारायणाख्यपुरुषरूपेण दिव्यमहिषीयुक्ता च भवति। उक्तं चाभियुक्तैः—

'शक्तिश्शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमासनजालमिच्छा।
ऐश्वर्यमावरणमायुधानि च त्वं किं तन्न यद्भवसि देवि शशाङ्कमौलेः॥

'योऽयं चकास्ति गगनार्णवरत्नमिन्दुः योऽयं सुरासुरगुरुः पुरुषः पुराणः।
यद्वाममर्धमिदमन्तकसूदनस्य देवि त्वमेव तदिति प्रतिपादयन्ति॥'

'एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले।
भोगे भवानी पुरुषेषु विष्णुः कोपे तु काली समरे च दुर्गा॥' इति।

श्रीमदप्पय्यदीक्षितैश्च शैवचिच्छक्तिनिरूपणपरे आनन्दलहरीग्रन्थे सर्वमिदमुक्तम्।

'शंभोर्ज्ञानक्रियेच्छाबलकरणमनश्शान्तितेजश्शरीर-
स्वर्लोकागारदिव्यासनवरमहिषीभोग्यवर्गादिरूपा।
सैवैतैरुपेता स्वयमपि च परब्रह्मणस्तस्य शक्तिः
सर्वाश्चर्यैकभूमिः मुनिभिरभिनुता वेदतन्त्राभियुक्तैः॥' इति॥

तैरेव हरिहररूपरत्नत्रयनिरूपिकायां रत्नत्रयपरीक्षायामप्युक्तं, 'धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावं बिभर्ति' इति, 'यश्चोपादानभूतः पर इह पुरुषः सैव नारायणोक्त्या ख्यातः' इति, 'तस्यैवाद्यस्य पुंसः परिणतिरखिलोऽप्यम्बरादिर्विकारः तस्यैवांशो विरिञ्चावधिरिह सकलोऽप्येष संसारिवर्गः' इति च। ब्रह्मणश्च सकलजगत्कर्तृभूतस्य निर्विकारत्वश्रुतिविरोधेन न साक्षादुपादानत्वमपि तु स्वापृथक्सिद्धचिच्छक्तितदंशनारायणद्वारकमित्यभ्युपगम्यते। एवं चिदचिद्रूपप्रपञ्चपरिणामित्वेन चिदचिद्रूपप्रपञ्चाभिन्नतया उक्ता च चिच्छक्तिः ब्रह्माभिन्नत्वेनापि श्रीकण्ठाचार्यैः भाष्ये बहुस्थलेषु उद्घोषिता। नैतदौपचारिकतया नयमर्हति। तात्पर्येण पौनःपुन्येन ब्रह्मचिच्छक्त्योरभेदस्य तत्र वर्णनात्। इत्थं रामानुजमतापेक्षया महतो विशेषस्य अद्वैतमतप्रत्यासत्तिगमकस्य श्रीकण्ठमते विद्यमानत्वादेवनिरुक्तविशेषमवलम्ब्यैव श्रीमद्दीक्षितेन्द्रैः शिवाद्वैतनिर्णयाख्यग्रन्थे 'ब्रह्मचिच्छक्तेः सकलचेतनाचेतनप्रपञ्चाकारत्वं। तस्या एव ब्रह्मस्वरूपत्वं, तदीय-

सकलगुणगणरूपत्वं, ब्रह्मणो निर्विकारत्वमित्यर्थचतुष्टयंश्रीकण्ठाचार्यैरभ्युपगतं निर्गुणं निष्प्रपञ्चं जीवाभिन्नं शुद्धाद्वैतरूपं ब्रह्मेति तेषां परमसिद्धान्तः इत्यमुमर्थं दृढमवगमयत्येव, तथाहि, चिच्छक्तेः ब्रह्माभेदे तस्या एव तदीयसकलगुणात्मत्वे च ब्रह्मणः स्वभिन्ना गुणा न सन्ति, किं तु स्वयमेव कल्पितभेदेन गुणवदप्यवभासते वस्तुतो निर्गुणमेव ब्रह्म इत्येतत् तावत्सिद्ध्यति। नह्यभेदे मुख्यो गुणगुणिभावः उपपद्यते, न चाभेद इव मुख्यगुणगुणिभावोपपादको भेदोऽपि आचार्यैरङ्गीकृत इति वक्तुं शक्यते, आरम्भणाधिकरणभाष्यादिषु विरोधेन भेदाभेदपक्षस्य प्रतिक्षिप्तत्वात्। न च मध्वमत इव आचार्याणां मते गुणगुणिनोर्भेदाभावेऽपि भेदप्रतिनिधिर्विशेषोऽभ्युपगतोऽस्ति। तस्मात् गुणविषये तावत् 'अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते' इति पञ्चपादिकोक्तपक्ष एवाभिमत इत्येतत् सुदृढमेव। तथा सकलप्रपञ्चाकारायाः चिच्छक्तेः ब्रह्माभेदाभ्युपगमेन वियदादिप्रपञ्चः तद्विवर्त इति सिध्यति। अन्यथा वियदादेरनित्यस्य तत्परिणामत्वाभ्युपगमे तदभिन्नस्य ब्रह्मणः निर्विकारत्वाभ्युपगमविरोधापत्तेः। तस्मात् संक्षेपशारीरकोक्तरीत्या भाष्ये परिणामवादावलम्बनं व्यवहारदृष्ट्या कर्मोपासनादिनिर्वाहार्थं तत्वदृष्ट्या तत्प्रतिषेधापेक्षिततदसक्त्यर्थं चेति ब्रह्मणो निष्प्रपञ्चत्वपक्ष एवाभिमतः इत्यपि सुदृढम्। ब्रह्माभिन्नायाः चिच्छक्तेः सकलचेतनप्रपञ्चाकारत्ववत् सकलचेतनप्रपञ्चाकारत्वस्याप्युक्तत्वेऽपि चेतनप्रपञ्चस्य वियदादिवत् तद्विवर्तत्वं न सिद्ध्यति। तथा सति तस्य तत्वज्ञानान्निवृत्त्या मुक्तिफलभाक्त्वाभावप्रसङ्गात्। नित्यस्य तस्य ब्रह्माभेदेऽपि ब्रह्मनिर्विकारत्वविरोधाप्रसङ्गाच्च। तस्मात् निर्गुणं निष्प्रपञ्चं जीवाभिन्नं शुद्धाद्वैतरूपं ब्रह्मेति आचार्याणामभिमतमित्येतत् सुदृढमेव। इत्यादि ग्रन्थेन श्रीकण्ठमतस्याद्वैततात्पर्यकत्वमप्याविष्कृतं। एवमेव सन् घट इत्यादि प्रत्यक्षस्य मतान्तर इव प्रपञ्चगतसत्यत्वविषयकत्वमनभ्युपगम्योपादान- मतसद्रूपब्रह्मतादात्म्यविषयकत्वं श्रीकण्ठाचार्याभ्युपगतं प्रपञ्चमिथ्यात्ववादद्वैतिनामनुकूलं। एवं घटः स्फुरतीत्यादि जीवधीष्वनुभूयमानस्य स्फुरणस्य ब्रह्मस्फुरणरूपत्वमहं सुखीति जीवैरनुभूयमानस्य सुखस्य ब्रह्मानन्दरूपपरशक्त्यंशत्वञ्च श्रीकण्ठाचार्याभ्युपगतमर्थात् जीवब्रह्माभेदसूचकं सत् अद्वैतिनामनुकूलं। जीव-

ब्रह्मणोऽभेदे अन्यज्ञानेन अन्येषां स्फुरणवत्त्वस्य अन्यानन्देन अन्येषां सुखित्वस्य चायोगात्। एवं "अनियमस्सर्वेषामविरोधः शब्दानुमानाभ्यां इत्यधिकरणे प्रथमं ब्रह्मोपासनासामान्येऽर्चिरादिगतिं व्यवस्थाप्यानन्तरं "केचिदाहुरनियमस्सर्वेषामुपासकानामर्चिगतौ नियमाभावः। तथा सति श्रुतिस्मृतिभ्यामविरोधः इति" इति मतान्तरमुपन्यस्य 'तत्रापि न दोषः निरन्वयोपासकानां तदपेक्षाभावादि'ति तस्यापि सौत्रयोजनान्तरस्य अद्वैतिसम्मतस्य अदुष्टत्वमुपपादितं तथा 'तदाऽऽपीतेः संसारव्यपदेशात्' इत्यधिकरणावसाने ,'केचिन्निरन्वयोपासकानामिह शरीरपात एव मुक्तिरिति अर्चिरादिगतिमनियतामाहुः' इत्युपन्यस्तं एवं 'अर्चिरादिना तत्प्रथिते'रित्यधिकरणावसनेऽपि "निरन्वयोपासकानां नार्चिरादिगतिरिति केचित्' इति कथितं, एवं यत्रयत्र अधिकरणे ब्रह्मविदः गतेरुत्क्रान्तेर्वा व्यवस्थापनं क्रियते तत्र सर्वत्रापि तस्य तस्याधिकरणस्य 'सकल ब्रह्मवेत्साधारण्यशङ्कापरिहारार्थमस्य मतस्योपन्यासात् अनियमाधिकरणे स्वयमपि अस्योपपादनाच्च अद्वैत्यभिमतायां निर्गुणज्ञानिनामिहैव मुक्तौ श्रीकण्ठाचार्याणामभिमतिरवगम्यते, केचिदित्युपन्यासस्य स्वयमिदानीं सगुणविद्यानिरूपणनिष्ठएव न तु भगवत्पादवत् निर्गुणविद्यानिरूपणनिष्ठ इति द्योतनार्थत्वमेव वक्तव्यं न तु स्वानभिमतिद्योतनार्थत्वं स्वानभिमतौ तन्मतस्योपपादनायोगात्, एवमुपासनस्य जीवब्रह्माभेदगोचरत्वोपवर्णनमप्यद्वैतिनामनुकूलम्। इदं प्रमेयजातं श्रीमद्दीक्षितैरेव शिवाद्वैतनिर्णये आनन्दलहर्याञ्च स्फुटं प्रत्यपादि। आनन्दलहरीस्थौ च पूर्वोक्तविषयसंग्रहकौश्लोकाविमौ

"उक्ता खल्वत्रमुक्तिः गतिमुपरि विना निर्गुणोपासकानां
जीवाभेदावलम्बासगुणपरशिवोपासनाप्यत्र भाष्ये।
सत्ता प्रत्यक्षबुद्धेर्जगति च विषयो वर्णितस्सत्यतान्यः
शुद्धं ब्रह्माद्वितीयं मतमिति बहुधाऽऽविष्कृतं तावदेवम्॥"
चिच्छक्तिं ब्रह्मणो यत् सकलचिदचिदाकारशालिस्वरूपां
सत्तां तस्य स्वरूपं यदपि गुणगणं यच्च तन्निर्विकारम्।
आचार्याः प्रोचुरेतैः दृढमधिगमितं निर्विशेषं तदिष्टं
जीवास्तेनैक्यभाजो वियदनिलमुखाः तद्विकृती इतीदम्॥" इति॥

इयता प्रबन्धेन च मध्वादिमतत्रयस्य भगवत्पादमतं प्रति सामान्यतो विशेषतश्च प्रत्यासन्नत्वमुपवर्णितम्। यद्यपि मध्वादिमतेषु जीवाणुत्वं साधितं नैयायिकादि-मतेऽपि जीवस्य ब्रह्माभिन्नत्वात् स्वभावतः विभुत्वमेवाङ्गीकृतं। नैयायिकमते भगवत्पादमत इव निर्विकल्पकज्ञानमङ्गीकृतं, रामानुजमते सविकल्पकविशेषरूपमेव प्रथमपिण्डज्ञानं निर्विकल्पकस्थानेऽभिषिक्तम्। एवमादिहेतुभिः नैयायिका-दिमतानामपि मध्वादिमतत्रयापेक्षया भगवत्पादमतप्रत्यासत्तिः वक्तुं उचितेव आपाततो भाति तथापि नैयायिकादिमतापेक्षया मध्वादिमते स्वतः प्रामाण्याभ्यु-पगम जीवचिदानन्दरूपत्वाभ्युगम मोक्षकालीनसुखाविर्भावाभ्युपगमसत्कार्य-कारणानन्यत्वाभ्युपग प्रकृतिपरिणामबाद श्रुत्यवष्टम्भेन मूलकारणव्यवस्थापना-दिभिः बहुभिरंशैः भगवत्पादमतप्रत्यासत्तेस्सत्वेन मध्वादिमतत्रयमेव भगवत्पाद-मतप्रत्यासन्नत्वेन दीक्षितचरणैर्वर्णितमित्यवगन्तव्यम्॥

अथ तुरीयं मध्वादिमतचतुष्टयस्य मुक्तिहेतुकर्मिकभूमिकाचतुष्टयं-रूपत्वं तदीयक्रमपाठसूचितं निरूप्यते। भगवत्पादानां हि मते उपनिषत्सु उपासनाकाण्ड ज्ञानकाण्डञ्चेति काण्डद्वयमन्तर्गतं वर्तते कर्मकाण्डन्तु तत्र नान्तर्गतं। उपासनाकाण्डे च विधीयमानमुपासनं मानसक्रियारूपं चोदना-तन्त्रम् पुरुषतन्त्रं क्रियायां विकल्पसंभवात् कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं न प्रमाणवस्तुपरतन्त्रम्। ज्ञानकाण्डोदितज्ञानं तु अक्रियारूपं प्रमाणवस्तुपरतन्त्रं वस्तुनि विकल्पासंभवत् कर्तुमकर्तुमन्यथावा कर्तुमशक्यमत एव न चोदनातन्त्रम नापि पुरुषतन्त्रम, किं चोपासने विद्यमानस्यापि वस्तुनः अविषयीभावः अविद्य मानस्यापि विषयीभावश्च, तत्वज्ञाने तु विद्यमानस्यैव विषयीभावः न त्वविद्य-मानस्य कस्याप्यंशस्य विषयीभावः सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्याः न विद्यमाना अप्यशास्त्रीयाः' इति छान्दोग्यभाष्यवचनात, न खलु यथाव-स्त्वेव उपासितव्यमिति कश्चिन्नियमोऽस्ति, किंतु यथावचनमेवोपासितव्यमित्ये-तावानेव नियमः' इति 'न हि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते, किं तु वचनानुसारेण' इति च ऐतेरियारण्यक भाष्यवचनात, उपासनज्ञानयोः वैलक्षण्यञ्च शारीरकभाष्य एव समन्वयाधिकरणादौ भगवत्पादैः स्फुटीकृतं।

तत्त्वज्ञानोपासनयोश्च पूर्वोक्तवस्तुतन्त्रत्वपुरुषतन्त्रत्वरूपवैलक्षण्यादेव ज्ञानस्य नानाविधत्वासंभवात् ज्ञानमार्गस्य एकविधत्वमुपासनस्य नानाविधत्वसंभवात् उपासनामार्गस्य बहुविधत्वम्। अत एव च भगवत्पादानां ज्ञानमार्गरूपैकविधाद्वैतमतस्थापकत्वमुपासनामार्गरूपनानाविधशैवशाक्तस्कान्दगाणपतवैष्णव सौररूपषण्मतस्थापकत्वञ्च। एवमुपासनस्य तत्त्वज्ञानान्महतो विशेषस्य सद्भावेऽपि

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥'

इति कल्पतरुवचनाद्युक्तरीत्याज्ञानं प्रति अन्तरङ्गसाधनत्वात् ज्ञानोपासनयोः रहस्यत्वमनोवृत्तित्वाभ्यां साम्याच्च हेतोः ज्ञाननिरूपणैदम्पर्यप्रवृत्तायामपि उपनिषदि ज्ञानेन साकं ज्ञाननिरूपणप्रसङ्गेनोपासनानामपि बहुविधानां कीर्तनं तदनुसारेणोपनिषद्विवरणरूपब्रह्ममीमांसायामपि उभयोर्निर्णयश्च, नतु ज्ञानबहिरङ्गसाधनभूतयज्ञादिकर्मकलापवत् उपासनानां वेदपूर्वभागे कीर्तनं कर्ममीमांसायां निर्णयश्च। तत्रापि यथा चतुर्ष्वपि वेदेषु सर्वप्राण्यनुग्रहार्थं ब्रह्मभावावाप्तिरूप महापुरुषार्थप्रतिपादनैदंपर्येणैव प्रवृत्तेषु तदुपयोग्यन्तःकरणशुद्धिजनककर्मनिरूपणार्थ एव भूयान्प्रपञ्चः तदधिकारिबाहुल्यात् निरूपणीयकर्मबाहुल्याच्च। अत एव च तन्निर्णयाय प्रवृत्ता धर्ममीमांसापि प्रतिपाद्यबाहुल्येन ग्रन्थतो महती सहस्राधिकरणोपेता, ब्रह्मनिरूपणार्थो वेदान्तभागस्तु अधिकारिबाहुल्याभावान्निरूपणीयबाहुल्याभावाच्च स्वल्पः अत एव च ब्रह्ममीमांसापिप्रतिपाद्याल्पत्वेन ग्रन्थतो लघ्वी एकाधिकनवत्युत्तरशताधिकरणोपेता। तथैव वेदान्तभागे तदार्थाविष्कारपरायां ब्रह्ममीमांसायां भगवत्पादीये तद्भाष्ये च निर्विशेषब्रह्मभावावाप्त्यर्थं तन्निदिध्यासनापेक्षितचित्तस्थैर्याद्युपयोगिसगुणब्रह्मोपासनप्रसङ्ग एव भूयानधिकारिबाहुल्यान्निरूपणीयनानाविधोपासनतदुपयोगिगुणादिबाहुल्याच्च। निर्विशेषब्रह्मस्वरूपज्ञाननिरूपणभागस्तु अधिकारिबाहुल्याभावात् निरूपणीयबाहुल्याभावाच्च स्वल्प एव। एवं ज्ञानकाण्डस्य स्वल्पत्वेऽपि तत्रापि तत्सार

भूतस्य महावाक्यस्य स्वल्पतरत्वेऽपि च प्राधान्यादुपनिषदिति, किं विशेषितेन, वेद इति च पदं महावाक्यस्यैव मुख्यवृत्त्या बोधकमन्यस्य गौण्या वृत्त्यैव बोधकं तदुक्तं संक्षेपशारीरके 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्त' इति 'अपरमखिलमस्यैवाङ्गभूतत्वहेतोरिह समभिनिविष्टंतद्गिरो वांच्य-मासीत' इति 'सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्ग्राहको वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः' इति

उपनिषद्वचसा परमात्मगीः सहजशक्तिवशेन निगद्यते।
तदुपचर्यमहागिरिवर्तते निकटभावमपेक्ष्य तु मुख्यगीः ॥
उपनिषद्वयनाभिहितात्मधी निकटवर्तिमहागिरिमुख्यवत्।
उपनिषद्वचनं तदवान्तरे वचसि गौणवदत्र विवक्ष्यते ॥ इति च ॥

तथा च वेदोपनिषत्पदमुख्यार्थभूतसारतममहावाक्यगर्भितज्ञानकाण्ड विवरणात्-मकं तत्वमस्यादिमहावाक्यजनितप्रत्यगभिन्न ब्रह्मगोचरनिर्विकल्पाखण्डसाक्षात्-कारेणैवाज्ञानतत्कार्यात्मककृत्स्नबन्धनिवृत्त्युपलक्षितपरिपूर्णब्रह्मानन्दाविर्भावरूपं 'न तस्य प्राणा उत्क्रामन्ति' 'ब्रह्मैव सन् ब्रह्माप्येति' 'अत्र ब्रह्म समश्नुते' इत्यादि श्रुतिवशेनाचिराधिगत्यनपेक्षं तत्तत्कर्मोपासनादिविविधसाधनकलापै तत्तद्देशप्राप्तिपूर्वकं लभ्यं सर्वमपिफलजातं वापीकूपतटाकसरिदाद्युदपानतुल्यं स्वात्मन्यन्तर्भावयत् सर्वतस्संप्लुतोदकसमुद्रायमाणं कैवल्यशब्दितं परममोक्ष मभिव्यञ्जयत भगवत्पादोद्घाटितं शुद्धाद्वैतमतं तत्प्रतिपादितस्य मोक्षसाधनीभूत जीवब्रह्मैक्यज्ञानस्य मुक्त्यव्यवहितचरमभूमिकारूपत्वेन श्रीमद्दीक्षितचरणैः चतुर्मतसारसंग्रहीत्यग्रन्थेऽन्ते सन्निवेशितं मध्वरामानुजश्रीकण्ठमतानि तु मुक्तिहेतुज्ञानसाधनी भूतवैधोपासनाबोधकोपासनाकाण्ड विवरणरूपत्वेन सामी-प्यसारूप्यसायुज्यरूपापरमोक्षाभिव्यञ्जकत्वेन च पूर्वभूमिकात्वात्पूर्वसन्निवेशि-तानि। तत्रापि ब्रह्मणः स्वस्वामि भावेनोपासनाहंग्रहोपासना चेति ब्रह्मोपासनायां भूमिकाद्वितयमस्ति, तत्र स्वस्वामि भावेनोपासना प्रथमभूमिका अहंग्रहोपासना च द्वितीयभूमिका। अहंग्रहोपासनायाञ्च भगवत्पादाभिमताद्वैतमतप्रतिपादि ततत्वज्ञान इव उपास्योपासकयो र्जीवब्रह्मणोरभेदो भाति। अहंत्वेन स्वात्मा-

भिन्नत्वेन ब्रह्मणो ग्रहो यत्रेतिव्युत्पत्तेः। स्वस्वामिभावोपासनायांन्तु नाभेदो भासते अपि तु भेद एव स्वस्वमिभावोपासनायाः अहंग्रहोपासनातः पूर्वभूमिकात्वञ्च

'तस्यैवाहं ममैवासौ स एवाहमितित्रिधा।
भगवच्छरणत्वं स्यात् साधनाभ्यासपाकतः॥'

इत्यादिवचनैः क्रमेण तस्यैवाहमिति ममैवासाविति च द्विविधस्वस्वामिभावोपासनाभ्यासपरिपाके नाहंग्रहोपासनसिद्धिबोधनादवगम्यते। स्वस्वामिभावोपासनायामपि पृथक्सिद्धस्वस्वामिभावोपासना अपृथक्सिद्धस्वस्वामिभावोपासनाचेति भूमिकाद्वितयमस्ति। तत्रापि पूर्वोक्तन्यायेन पूर्वभूमिकाभ्यासपरिपाकेनोत्तर भूमिकासिद्धिरवगन्तव्या। पृथक्सिद्धस्वस्वामिभावोपासनाच प्रथमभूमिका अपृथक्सिद्धस्वस्वामिभावोपासना च द्वितीयभूमिका, प्रथमा मध्वमते द्वितीया रामानुजमते, विशिष्टाद्वैतमते हि 'यस्य पृथिवीशरीरं 'यस्यात्मा शरीरं' इत्याद्यन्तर्यामिब्राह्मणवाक्यानुसारेण चिदचिद्रूपयोर्जीवजगतोर्ब्रह्मणश्चशरीरशरीरिभावः अभ्युपगम्यते, शरीरशरीरिणोश्च प्रभाप्रदीपगुणगुणिक्रियाक्रियावज्जातिव्यक्त्यवयवावयविनामिवापृथक्सिद्धिरिष्यते तथा च जीवस्य ब्रह्मशरीरत्वात् ब्रह्मणा साकमपृथक्सिद्धिः। जीवब्रह्मणोश्चापृथक्सिद्धत्वेऽपिनाभेदः। नापि भेदाभेदः अपि तु राजभृत्ययोरिव स्वस्वामिभावेनात्यन्तंभेद एव। एवञ्च जीवब्रह्मणोः शरीरशरीरिभावानुसन्धानपूर्वकं शेषशेषिभावापरपर्यायस्वस्वामिभावेनोपासना अपृथक्सिद्धस्वस्वामिभावोपासनेत्युच्यते। राजभृत्ययोरिव जीवब्रह्मणोरपि शरीरशरीरिभावानभ्युपगमेनापृथक्सिद्ध्यनङ्गीकारात् शरीरशरीरिभावानुसन्धानरहितस्वस्वामिभावोपासना पृथक्सिद्धस्वस्वामिभावोपासनेत्युच्यते उभयविधस्वस्वामिभावोपासनयोरपि अभेदानवगाहनात् अभेदावगाह्यहंग्रहोपासनातः पूर्वभूमिकात्वमेव। उभयविधस्वस्वामिभावोपासनयोरपि मध्ये जीवब्रह्मणोरत्यन्तभेदसत्वेऽपि अभेदानवगहनेऽपि च शरीरशरीरिभावमात्रेण शरीरवाचकानां शरीरिपर्यन्तत्वनियमादहं ब्राह्मणः अहं मनुष्य इत्यादि शरीरात्मसामानाधिकरण्यव्यपदेशवत् "अहं ब्रह्म" इति जीवब्रह्मसामानाधिकरण्यव्यपदेशस्य जीव-

ब्रह्माभेदबोधकमत एव संभवादपृथक्सिद्धस्वस्वामिभावोपासनायाः द्वितीयभूमिकात्वं पृथक्सिद्धस्वस्वामि भावोपसनायास्तु जीवब्रह्मणोश्शरीरशरीरिभावाभावेन राजाभृत्य इत्यादिवदहं ब्रह्मेति सामानाधिकरण्यव्यपदेशासंभवात् प्रथमभूमिकात्वमितिमन्तव्यं। अत एव पृथक्सिद्धस्वस्वामिभाववर्णनपरमध्वमते 'तत्त्वमसीत्यत्र अतत्त्वमसीति छेदस्य तदिति पदस्य लुप्ततृतीयादि विभक्तिकत्वस्य वा श्रयणं। तथा च मध्वमते जीवब्रह्मणोश्शरीरशरीरिभावानङ्गीकारेण पृथक्सिद्धस्वस्वामिभावोपासनाया वर्णनात् मध्वमतस्य प्रथमभूमिकात्वं। रामानुजमते जीवब्रह्मणोश्शरीरशरीरिभावाङ्गीकारेणापृथक्सिद्धस्वस्वामि भावोपासनाया वर्णनात् रामानुजमतस्य द्वितीयभूमिकात्वं श्रीकाण्ठमते जीवब्रह्मणोर भेदावगात्यहंग्रहोपासनवर्णनात् श्रीकण्ठ मतस्य तृतीय भूमिकात्वमवसेयम्। यद्यपि रामानुज भाष्येऽपि दहराद्युपासना अहंग्रहोपासनाशब्देनैव व्यवहृता। केहमिति स्वात्मतया अनुसन्धानमिति च व्यवहृतं। तथापि तत्र स्वात्मतयेत्यस्य स्वशरीरित्वेनेत्येवार्थः। तथा चाहंत्वेन स्वशरीरित्वेन ब्रह्मणोग्रहः यत्रेतिव्युत्पत्त्यास्वस्वामिभावोपासनाविशेषस्यैवाहंग्रहोपासनाशब्देनव्यवहारः, न तु तत्र स्वाभिन्नत्वेनापि परमात्मनो ग्रह इति भ्रमितव्यं। यद्यपि च श्रीकण्ठभाष्येऽपि रामानुजभाष्य इव अंशाधिकरणादौ शास्त्रदृष्टिसूत्रे च दहराद्यहंग्रहोपासनेषु शरीरशरीरिभावमूलकापृथक्सिद्धिविषयत्वमभ्युपगतं तथापि श्रीकण्ठभाष्य एव 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' इत्यहंग्रहाधिकरणादौ शास्त्रदृष्टिसूत्रव्याख्यानान्तरेण नवराद्यहंग्रहोपासनासु जीवब्रह्माभेदगोचरत्वमपि स्पष्टतया प्रदर्शितम। तच्च तत्स्थले श्रीकण्ठ भाष्यतदी यशिवार्कमणिदीपिकाख्यदीक्षितचरणकृतव्याख्यानदर्शिनां स्पष्टमिति न तद्विलिख्यते। अहंग्रहोपासनासु प्रतीयमानस्स चाभेदः

अद्वैतमागमशिरोभिरुपासनायामुक्तं तवेति परमार्थतया न वाच्यम्।
भेदस्स्फुटो गरुडमान्त्रिकयोरलीकं तादात्म्य भावनमथापि विषं
प्रमार्ष्टि ॥'

इति सुदर्शनाचार्यैः तात्पर्यसंग्रहे कथितरीत्या आरोपित इत्ययपि वक्तुं शक्यते

तथापि जीवब्रह्माभेदस्यारोपितत्वाङ्गीकारेऽपि श्रीकण्ठाचार्यैरहंग्रहोपासनामु जीवब्रह्माभेदाभानाङ्गीकारात् रामानुजमध्वाचार्याभ्याममभेदोपासनस्यापि अनङ्गीकारात् श्रीकण्ठमतमाचार्यपादाभिमत जीवब्रह्माभेदतत्त्वज्ञानप्रतिपादकाद्वैतमताव्यवहितपूर्व भूमिकारूपं इतरत् व्यवहितपूर्वभूमिकारूपम् इति प्रकृतविषयस्य न काप्यनुपपत्तिः। वस्तुतस्तु श्रीकण्ठाचार्यैः 'निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दसाक्षि स्वप्रकाशशिवरूपपराहंभावापत्तिः मुक्तिरिति सर्वं श्रुतितात्पर्यात्' इत्यहंग्रहाधिकरणभाष्यवचनादिभिः निखिल भ्रान्त्यादिहेतुपुण्यपापक्षयपूर्वकं परमशिवलोके तत्सायुज्यं प्राप्तस्यापि मुक्तस्य बुद्धौ आरोपितार्थास्पर्शिन्यामुपासनाकालाभ्यस्ताभेदभावना प्रकर्षजवासनादार्ढ्यप्रयुक्तशिवाहंभावविषयकत्वानुवृत्त्युक्त्यार्थात् जीवब्रह्माभेदः पारमार्थिक इत्यपि सूच्यत इति अभेदोपासनस्येवाभेद तत्वज्ञानस्यापि भगवत्पादमत इव श्रीकण्ठमतेऽपि अङ्गीकाराविष्कारात् श्रीकण्ठमतमाचार्य पादमताव्यवहित पूर्वभूमिकारूपमिति सुदृढम्। एतच्च दीक्षितचरणैरेव शिवाद्वैतनिर्णये सवृत्तिकानन्दलहरीग्रन्थे च स्फुटं प्रतिपादितं। अत्र च श्रीकण्ठभाष्ये प्रतिपादितमहङ्ग्रहोपासनानां शरीरशरीरिभावरूपस्वस्वामिभावविषयकत्वं जीवब्रह्माभेविषयकत्वञ्चेति प्रकारद्वयं परस्परविरुद्धं यद्यपि तथापि अधिकारिभेदेतत्प्रदर्शितमिति न विरोधः इत्यपि दीक्षितचरणैरेवोक्तं तथा हि 'शुद्ध ब्रह्मावाप्तिरूपमहाफल श्रवणमात्रसंतुष्टः तत्प्राप्त्यर्थं तन्निदिध्यासनसाक्षात्कारजनन समर्थचित्तैकाग्र्यरहितः मन्दः तदुपयोगिनं सगुणोपासनभागमपहाय शुद्धब्रह्मविषयेषु श्रवणमनननिदिध्यासनेषु हठात् प्रवृत्तः तदुचितं चित्तैकाग्र्य मनधिगच्छन्नुभयभ्रष्टोमाभूत् दृढभक्तिपूर्वकचिरनिरन्तरोपासनाराधितस्यानन्तकल्याणगुणदिव्यविग्रहविशिष्टस्य सगुणेश्वरस्य प्रसादान्निर्गुणविषयकचित्तस्थैर्यं प्राप्नोत्विति तदनुजिघृक्षया तं निर्गुणविषयक प्रवृत्तेः प्रच्याव्य सगुणोपासनास्वेव स्थिरया भक्त्या प्रवर्तयितुं निर्गुणनिगूहनेन वेदान्तानां सगुणे समन्वयप्रदर्शन पूर्वकं भगवत्पाद प्रदर्शित एव सगुणब्रह्माभेदोपासनामार्गः यथा श्रीकण्ठाचार्यैः प्रदर्शितः भाष्ये तथैव साक्षान्मोक्षोपयोगितत्वावबोधार्थं श्रवणमननपूर्वके

निर्विशेषनिदिध्यासने वा तदपेक्षितात्यर्थचित्तैकाग्र्यादिसंपादनद्वारा तदुपयोगिनि दहरविद्यादिरूपे सविशेषब्रह्माभेदोपासने वा सामर्थ्यादिरूपस्य लौकिकस्य शास्त्रीयस्यावाधिकारि विशेषणस्य वैकल्यात् अधिकारपौष्कल्यरहितान्प्रति प्रवर्तितः पुराणेतिहासागमप्रसिद्धः तत्क्रतुन्यायेन स्थानविशेषगतभगवत्कैङ्कर्य प्राप्तिफलकः स्थानविशेषप्राप्त्यनन्तरं तत्रैवाभेदोपासनादिद्वारा मोक्षफलकश्च योऽयं दासमार्गः तन्मार्गावलम्ब्यधिकारिविशेषान्प्रति शरीरशरीरिभावरूपस्व-स्वामिभावोपासनामार्गोऽपि भाष्ये तैः प्रदर्शित इति नविरोधः' इति । एवञ्च यथा भगवत्पाद प्रदर्शित निर्गुणज्ञानसगुणध्यानरूपमार्गद्वयमध्ये सगुणध्यान मार्गमेवाधिकारि विशेषानुगुणमधिकृत्य श्रीकण्ठमतं प्रवृत्तं तथैव श्रीकण्ठाचार्य प्रदर्शिताभेदोपासनशरीरिशरीभावात्मकस्वस्वामि भवोपासनरूपमार्गद्वयमध्येऽपि शरीरशरीरिभावरूपस्वस्वामि भावोपासनमार्गमेवाधिकारिविशेषानुगुणमधिकृत्य रामानुजमतं प्रवृत्तमिति बोध्यम् । स्वस्वामिभावोपासनाहंग्रहोपासनतत्त्वज्ञानानाञ्च पूर्वपूर्वापेक्षा उत्तरोत्तरस्योत्तरोत्तरोत्कृष्टभूमिकात्वं तेषामुत्तरोत्तरोत्कृष्टफलकीर्तनेन सूचितम् श्रीमद्भास्कररायैः शिवनामकल्पलतिकाख्यायां पद्यरूपायां शिवाष्टोत्तरव्याख्यायां

'प्रतीकविदहंग्रहोभृतकइन्युपास्तेर्निजा-
द्विधेश्शिवसमीपता शिवतदात्मतासार्ष्टिताः ।
भवन्ति ससलोकता अमृतताऽऽत्मविज्ञानतोऽ-
खिलं फलमतो भवेदिति मतोऽपवगप्रदः ॥ इति ॥

अत्र श्लोके सार्ष्टिता समानधर्मिता सारूप्यमिति यावात् । निजविधिः स्वधर्मरूपं कर्म, भृतकः स्वस्वामिभावोपासकः इति चार्थः तथा च कर्मणः सलोकता प्रतीकोपासस्य सामीप्यं स्वस्वामिभावोपासनस्य सारूप्यं अहंग्रहोपासनस्य सायुज्यं तत्त्वज्ञानस्य कैवल्याख्यममृतत्वञ्च फलं क्रमेणोत्कृष्टमिह निर्दिष्टम् । यत्तु वेङ्कटनाथेन 'सालोक्यसारूप्यादिशब्दवत् सायुज्यशब्दोऽपि युक्साम्यपरः सर्वं हि भगवता मुक्तेन च भोग्यत्वेन युक्तं शरवत्तन्म यो भवेदित्यादिषु उक्तसंयोग-विशेषः सायुज्यशब्देन विवक्षित इत्यपि साधु' इति सायुज्यशब्दस्य तादात्म्यार्थातिरेकेण केवल भेदार्थकत्वमुक्तं तत्तस्यस्वस्वामिभावरूपभेदोपासनामार्गा-

वलम्बित्वात्तस्यैव सायुज्यफलकत्ववर्णनाशया, तत्र च तत्क्रतुन्यायविरोधेन तादात्म्यफलवर्णनस्यायोगात् । अभेदोपासनारूपाहंग्रहोपासनानान्तु तत्क्रतुन्यायेन तादात्म्यरूपसायुज्यफलकत्ववर्णनमेवोचितम्, अत एव श्लोके सायुज्यशब्दस्थाने तदात्मेतीति निर्दिष्टम् ॥

एवं मतचतुष्टयस्य क्रमनिर्देशप्रयोजकक्रमिकभूमिकाचतुष्टयरूपत्वे जीव-ब्रह्मणोः पृथक्सिद्धस्वस्वामिभावोपासनापृथक्सिद्धस्वस्वामिभावोपासनाभेदोपासनाऽभेदतत्त्वज्ञानरूपोत्तरोत्तरोत्कृष्टमुक्तिसाधनपदार्थव्यवस्थापकत्वमेकं कारणमुक्तं ।

अथापरमपि कारणमुच्यते

'भेदः प्रमान्तरैस्सिद्धः न त्वागमसमाश्रयात् ।

पशवोऽपि हि जानन्ति भेदमक्षादिमानतः ॥'

इति वार्तिकाद्युक्तरीत्या सर्वेषामपि जनानां स्वाभाविकाज्ञानिकसकलविधबन्धहेतुद्वैतप्रतीतिनिरासेन कथञ्चित् शास्त्राधेयवेदपरमतात्पर्यगोचरपरमानन्दाविर्भावरूपमुक्तिहेतुभूताद्वैतप्रतीत्युत्पादन एव सर्वेषामपिमतानां तात्पर्यमित्येतत् सर्वमतलक्ष्यैक्यमूलकाविरोधप्रतिपादकपूर्वोक्तबहुप्रमाणवचनसिद्धम् । एवं सत्यपि अनादिनिरूढद्वैतवासनावासितान्तः करणेषुअधिकारिषु सहसैव द्वैतप्रतीत्युपमर्देन परमपुरुषार्थहेतुभूताद्वैतप्रतीत्युत्पादनस्याशक्यतया परश्शतवेदान्तवाक्येषु जीवजगद्ब्रह्मणामद्वैतप्रतिपादकेषु सत्स्वपि तेषां 'आदित्यो यूपः' यजमानः प्रस्तरः' इत्यादिवाक्यानामिव बाधितार्थकत्वभ्रमस्यैव जायमानत्वेन तस्यापि निराकरणायोगेन यथाकथञ्चित्सन्मार्गे सर्वेषामपि बुद्धेस्संग्रहणीयत्वात्तद्बुद्ध्यनुसारेणैव वेदान्तप्रतिपादितसन्मार्गप्रवेशहेतोस्सुगमस्य द्वैतबुद्ध्यविरोधिनः कस्यचिन्मतस्य प्रथममवश्यापेक्षितत्वेन मध्वाचार्यप्रवर्तितस्य च जीवजगद्ब्रह्मणां जीवानां जगताञ्च मिथो भेदमभ्युपगम्यैवाद्वैतवचनानामपि कथञ्चित् द्वैतार्थकत्वं परिकल्प्य मुक्तावपिलोकबुद्ध्यनुसारेण विषयभोगं तत्तारतम्यं आनन्दानन्दिनोर्भेदं मुक्तियोग्यतमोयोग्यनित्यसंसारिरूपजीवानामणुत्वं ब्रह्मणो जगन्निमित्तकारणमात्रत्वं नारायणाख्यस्य परब्रह्मणः पृथक्सिद्धस्वस्वामिभावोपासनेन जीवानां नानाविधस्वस्वयोग्यतानुसारेण मुक्तिलाभमन्यच्चैतादृशविषयजातं बुद्धेः कथमपि

क्लेशमजनयित्वैव बोधयतः तादृशत्वेन तथैव मुक्तिसौधनिश्रेणिकाप्रथमपर्वत्वेन श्रीमद्दीक्षितचरणाः प्रथममरिच्छेदे प्रतिपादयामासुरिति युज्यते, यथाकर्मवासनावासिताधिकार्यनुसारेण छान्दोग्योपनिषदि कर्माङ्गावबद्धोपासनेनोपक्रमः 'तत्र कर्माभ्यासस्य दृढीकृतत्वात्कर्मपरित्यागेनोपासने दुःखं चेतस्समर्पणं कर्तुमिति कर्माङ्गविषयमेवतावदादौ उपासनमुपन्यस्यते' इति छान्दोग्यभाष्यात्, यथा वाध्ययनवासनावासिताधिकार्यनुसारेण तैत्तिरीयोपनिषदि संहितोपासनेनोपक्रमः 'अथ अध्ययनानन्तरं अतः यतोऽत्यर्थग्रन्थभाविताबुद्धिः न शक्यते सहसा अर्थज्ञानविषयेऽवतारयितुमित्यतः संहिताया उपनिषदं संहिताविषयं दर्शनं ग्रन्थसन्निकृष्टामेवव्याख्यास्याम इत्यर्थः' इति तैत्तिरीयभाष्यात् तथैव द्वैतवासनावासिताधिकार्यनुसारेण द्वैतमतेनोपक्रान्तं दीक्षितचरणैरिति सुष्ठु युज्यते। अधिकारी प्रथमतः लोकाद्व्यावृत्तस्सन् शास्त्रवश्यो भवतु लौकिकक्रियाकारकफलात्मकद्वैतपदार्थवासनां परित्यज्य शास्त्रीयक्रियाकारकफलात्मकद्वैतपदार्थवासनावासितो भवतु पश्चात् कथञ्चिदद्वैतवासनया तामप्यपाकरिष्याम इति तेषां निगूढोऽभिप्रायः। अथ प्रथमपर्वतया प्रदर्शितमध्वाचार्यप्रवर्तितद्वैतमतपरिचयवशेन लोकवासनाव्यावृत्तिपूर्वकं शास्त्रवश्यतामापन्नस्य द्वैतमतोक्तप्रकारेण भगवतः पृथक्सिद्धस्वस्वामिभावोपासनाधीनभगवदनुग्रहवशात् समुपजातचित्तशुद्धिविवेकादिसाधनस्याधिकारिपुरुषस्य शनैश्शनैरुन्निनीषया द्वैतवासनाया अनुन्मूलनेनैव कथञ्चिदद्वैतवासनाया अपि किञ्चिदेव आधायकस्य कस्यचिन्मतस्यापेक्षितत्वेन विष्णुविशिष्टाद्वैतमतस्य च रामानुजाचार्यप्रवर्तितस्य द्वैतवासनावासितपुरुषीयद्वैतप्रतीत्यनुपमर्देनैव जीवजगद्ब्रह्मणां जीवानां जगताञ्च मिथो भेदमभ्युपगम्यैव परं तु पूर्वमतवत् जीवजगद्ब्रह्मणामद्वैतप्रतिपादकश्रुतिवचनानां कथचित् द्वैतार्थकत्वकल्पनप्रयुक्तक्लेशं विहाय जीवजगद्रूपयोः चिदचितोः ब्रह्म प्रति शरीररूपविशेषणत्वं ब्रह्मणश्च चिदचितौ प्रति शरीरित्वरूप विशेष्यत्वं शरीरशरीरिभावनिबन्धनां जीवजगद्ब्रह्मणां त्रयाणां तत्वानामपृथक्सिद्धिञ्च व्यावर्ण्य चिपचिद्रूपशरीरात्मकविशेषणविशिष्टब्रह्मणः सकाशात् व्यतिरिक्तस्य ब्रह्म प्रति अविशेषणीभूतस्य अशरीरस्य

पृथक्सिद्धस्य पदार्थस्य लोकेऽभावेन विशिष्टरूपेणाद्वैतमुपवर्ण्य एतदर्थबोधकत्वमेवाद्वैतबोधकवचनानां परिकल्प्य ब्रह्मणः केवलनिमित्तत्वनिराकरणपूर्वकमभिन्ननिमित्तोपादानत्वं प्रसाध्य जीवाणुत्वं पूर्वमतोक्तमनपहायैव विषयभोगञ्च मुक्तौ स्वीकृत्यैव परं तु मुक्तौ तारतम्यं निराकृत्य नारायणाख्यब्रह्मणः स्वशरीरित्वरूपस्वशेषित्वेनापृथक्सिद्धस्वस्वामिभावोपासनां बोधयतः तादृशत्वेन तदेव मुक्तिसौधनिश्श्रेणिकाद्वितीयपर्वत्वेन श्रीमद्दीक्षितचरणाः द्वितीयपरिच्छेदे प्रतिपादयामासुरिति युज्यते। विशिष्टाद्वैतमते हि जीवजगद्रूपयोः चिदचितोः ब्रह्मणश्च घटपटयोरिव न पृथक्भावरूपः अत्यन्तभेदः तदनन्यत्वश्रुतिविरोधात्। नाप्यत्यन्तमभेदः विरुद्धधर्मवत्त्वात्, नापि भेदाभेदः भेदाभेदयोरेकत्र विरोधात् किं तु गुणगुण्यादिन्यायेन लौकिकवैदिकसकलप्रमाणप्रसिद्धान्तर्गणिकभेदाप्रतिक्षेपकमपृथग्भावेनानन्यत्वमुच्यते। इदमेव चानन्यत्वं विशिष्टाद्वैतमते नाभिलप्यते। यथा लोकेशरीरस्यशरीरिणश्च भेदेसत्यपि शरीरशरीरिणोः घटपटादिवत्पृथक्सिद्ध्यभावेन शरीरविशिष्टस्य शरीरिणः एक एवासौ देवदत्त इति अद्वैतं व्यवह्रियते यथा वा नगरवृक्षादीनामन्तर्गतानां गृहप्रासादवीथीप्राकारगोपुरारामवापीकूपतटाकनद्यादीनां शाखापलाशकुसुमफलादीनाञ्च बहुविध पदार्थानां सत्वेपि एकमेवेदं नगरं एक एवायं वृक्षः इत्येवमादिविशिष्टरूपेणैक्यं व्यवह्रियते तद्वदेव ब्रह्मणोऽपि विशिष्टरूपेणैकत्वव्यवहारः। विशिष्टाद्वैतसिद्ध्यर्थमेव तन्मते जीवजगत्साधारणशरीरत्वपरिष्कारप्रयासोऽपि विशिष्टाद्वैतमते मायाया एव जगद्रूपपरिणामित्वेन विकारित्वेऽपि ब्रह्मणश्चाविकारित्वेऽपि च जगदाकारपरिणाम्यपृथक्सिद्धमायाशरीरकत्वेन ब्रह्मणः उपादानत्वव्यवहारः। ब्रह्मणः केवलनिमित्तकारणत्वाभ्युपगमेकुलालादितो घटादेः पृथग्भाव इव ब्रह्मणोऽपि सकाशाज्जगतः पृथग्भावस्स्यात् अत उपादानत्वस्यापि वर्णनं। तथा सति मृदादित इव घटादेः ब्रह्मणस्सकाशाज्जगतोऽपृथग्भावस्स्यात्।

एवं जीवजगतोः ब्रह्मशरीरत्वानुपगमे पृथग्भावस्स्यात् अतश्शरीरत्ववर्णनम् तथा च विशिष्टाद्वैतमताश्रयणेन कथंचिदपृथग्भावेनानन्यत्वरूपस्याद्वैतस्य वासना जायेतेति तन्मतं द्वितीयपर्वत्वेन निवेशयतां दीक्षितचरणानाम-

भिप्रायः। किं च विशिष्टाद्वैतमते मध्वमतवत् मुक्तिदशायां जीवानां तारतम्यं नाङ्गीक्रियते तदपि तन्मतस्य द्वितीयपर्वत्वाश्रयणे बीजं। मध्वमत इव बन्धदशावत् मुक्तिदशायामपि जीवतारतम्याङ्गीकारे हि मुक्तिकालीनस्य तारतम्यस्य पारमार्थिकत्वेनैव वक्तव्यत्वेन परस्परविलक्षणत्वेन प्रमितानां अत एव बहूनां जीवानामेकेन ब्रह्मणा ऐक्यस्य संभावयितुमप्यशक्यत्वेन तृतीयतुरीयपर्वरूपमतयोरद्वैतं बोधयितुमशक्यं स्यात्। रामानुजमते मुक्तिकाले मुक्तितारतम्यखण्डनपूर्वकं मुक्तानां मिथः साम्यस्य व्यवस्थापनात् समानाञ्च भेदप्रयोजकवैलक्षण्याभावेन ऐक्यमपि बोधयित्वा ब्रह्मणा साकमभेदः उत्तरपर्वणोर्बोधयितुं सुकरस्स्यादिति दीक्षितचरणानामाशय उन्नीयते। एवञ्च मध्वमतविलक्षणं रामानुजमतोक्तं ब्रह्मोपादानत्वं शरीरशरीरिभावनिबन्धनापृथक्सिद्धिमूलकविशिष्टाद्वैतं मुक्तितारतम्य भङ्ग इति त्रयमेवाद्वैतवासनाधायकं तन्मतस्य द्वितीयपर्वत्वगमकं बोध्यम्। यद्यपि रामानुजमते जीवब्रह्मणोर्भेदसाधकं परममुक्तिदशायामपि स्वामित्वकिङ्करत्वमूलकं जगत्कारणत्वतदभावमूलकं अणुत्वविभुत्वरूपधर्मभेदमूलकञ्च वैलक्षण्यं अणोरपि जीवस्य संकोचविकासशालिधर्मभूतज्ञानप्रसरेण कृत्स्नशरीरव्यापिसुखाद्यनुभवोपपादनं निर्विशेषाद्वैतब्रह्मसिद्ध्युपयोगिभूतस्य वैशिष्ट्यानवगाहिनः निर्विकल्पकज्ञानस्य खण्डनपूर्वकं गुणसंस्थानादिविशिष्टविषयकप्रथमपिण्डज्ञानस्य निर्विकल्पकत्वव्यवस्थापनं प्रपञ्चमिथ्यात्वेनाद्वैतसिद्ध्युपयोगिनः दृष्टान्तरूपस्य स्वाप्नपदार्थशुक्तिरजतादिमिथ्यात्वस्य खण्डनपूर्वकं सत्ख्यातिवादाङ्गीकारः इत्यादिप्रमेयजातं द्वैतवासनाधायकमपि निरूपितमस्ति। तथापि बलवद्द्वैतवासनावासितस्य सहसा अद्वैतबुद्ध्युत्पादासंभवात् उत्तरोत्तरपर्वारोहणेन क्रमेण पूर्णाद्वैतवासनासिद्धिर्भविष्यति इदानीं प्रपञ्चसत्यत्ववासना जीवब्रह्मभेदवासना सर्वपदार्थसविशेषत्ववासनाचास्तु तावतापि नक्षतिः। अर्धं तावदपनीतं भारस्य इति न्यायेन कियती द्वैतवासना नष्टा पूर्वोक्तरीत्या विशिष्टरूपेणापि कियती अद्वैतवासना जाता तावदलमिति तात्पर्येणैव रामानुजमतं द्वितीयपर्वत्वेन निवेशितमिति न विरोध इत्यवगन्तव्यम्। अथ द्वितीयपर्वतया प्रदर्शितरामानुजाचार्य प्रवर्तित विशिष्टाद्वैतमतपरिचयवशेन तन्मतोक्त

प्रकारेण भगवतः अपृथक्सिद्धस्वस्वामिभावोपासनाधीनभगवदनुग्रहवशात् द्वैतवासनायाः किञ्चिदिव ह्रासं अद्वैतवासनायः किञ्चिदिव प्रादुर्भावञ्चाधिगतवतः अधिकारिपुरुषस्य ततोऽपि किञ्चिदुन्निनीषया द्वैतवासनायांस्सर्वथा अनुन्मूलनेऽपि पूर्वमतादप्यधिकतया अद्वैतवासनाधायकस्य कस्यचिन्मतस्यापेक्षितत्वेन श्रीकण्ठाचार्यप्रवर्तितस्य शक्तिविशिष्टशिवाद्वैतमतस्य च रामानुजमतवदेवप्रायशः प्रक्रियाङ्गीकारेऽपि पूर्वं रामानुजमतश्रीकण्ठमतयोर्महतो विशेषस्य निरूपण प्रकरणोक्तप्रकारेण चिदचिद्रूप प्रपञ्चात्मना परिणामिन्याशिचच्छक्तेः चिदचिद्रूपप्रपञ्चाभेदं तस्या एव ब्रह्मभिन्नत्वं तदीय सकलगुणगणरूपत्वमथापि ब्रह्मणो निर्विकारत्वं जीवसंबन्धिघटस्फुरणस्य ब्रह्मस्फुरणरूपत्वं अहं सुखीति जीवानुभूयमानसुखस्य ब्रह्मानन्दांशत्वं ब्रह्मज्ञानिनः अर्चिरादिगत्यभावेन इहैवमुक्ति प्रतिपादकमतनिर्दुष्टत्वमहंग्रहोपासनेषु जीवब्रह्माभेदभानं मुक्तिदशायामपि जीवब्रह्माभेदभानञ्चव्यपस्थापयतः 'आचार्याणान्तु स्वप्नव्यवहारः मनोराज्यादि व्यवहार इव न जीवसङ्कल्पकृतः किं तु परमेश्वरसङ्कल्पमात्राधीनः इत्येतावन्मात्रेऽभिनिवेशः तस्यैवसूत्रार्थत्वात् न तु स्वप्नसत्यत्वमिथ्यात्वादिपक्षेषु, अतोऽत्र पक्षविशेषो न विचिन्तितः' इति शिवार्कमणिदीपिकायां दीक्षितेन्द्रोक्तरीत्या स्वप्नसत्यत्वपक्षाग्रहशून्यस्य तादृशत्वेन तदेव मुक्तिसौधनिश्रेणिकातृतीयपर्वत्वेन श्रीमद्दीक्षितचरणाः तृतीयपरिच्छेदे प्रतिपादयामासुरिति युज्यते श्रीकण्ठमतस्य मतान्तरापेक्षया अद्वैतमतप्रत्यासत्त्यतिशयश्च पूर्वमेव स्फुटम् वर्णितः। भगवत्पादमतस्य श्रीकण्ठमतस्य च प्रत्यासत्त्यतिशयसद्भावादेव श्रीभागवतव्याख्यातृ श्रीनीलकण्ठयतीन्द्रप्रणीते यतिधर्मप्रबोधे 'सूत्रार्थावगतिमतगंभीरामधिगन्तुं विद्वज्जन मनोहरं श्रीशंकरभगवत्पादीयं उत अखिलचेतन समुपासनानुगुण समुदितनिजप्रसादसमर्पितपुरुषार्थसार्थनिष्कलसकलब्रह्मप्रतिपादकमुपनिषच्छास्त्ररहस्यविशदीकरणबद्धकङ्कणश्रीकण्ठशिवाचर्यविरचितं वामहाभाष्यं गुरुमुखेन परिशीलयन् इत्यादिग्रन्थेन सन्यासिनः भगवत्पादभाष्यं अथवा श्रीकण्ठभाष्यं परिशीलनीयत्वेनोक्तं न तु भाष्यान्तरमित्यपिवेदितव्यं।

अथ तृतीयपर्वतया प्रदर्शित श्रीकण्ठाचार्य प्रवर्तितशक्तिविशिष्टशिवाद्वैतमतपरिचयवशेन तन्मतोक्तप्रकारेणशक्तिविशिष्टशिवाभेदगोचराहंग्रहोपासनावर्जितभगवदनुग्रहेण

"तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥
अनुग्रहश्च देवस्य शक्त्या चिद्रूपयासह ।
यथावत्तंपरिज्ञायध्यायद्भिस्समवाप्यते ॥"

इति शिवार्कमणिदीपिकायां दीक्षिचरणैरेवोक्तरीत्या समासादितपूर्णाद्वैतवासनस्य अधिकारिपुषस्य साधनचतुष्टयसंपन्नस्य कैवल्यशब्दिते परिपूर्णस्वाराज्येऽभिषेचनाय

'नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं
धर्मो धर्मीति रूपद्वयमयतिपृथग्भूय मायावशेन ।
धर्मस्तत्रानुभूतिस्सकलविषयिणी सर्वकार्यानुकूला
शक्तिश्चेच्छादिरूपा भवति गुणगणश्चाश्रयस्त्वेक एव ॥'

इति रत्नत्रयरीक्षयां दीक्षितचरणोक्तरीत्या श्रीकण्ठभाष्योक्तचिच्छक्तिशिवात्मक धर्मधर्मिरूपमायिकरूपद्वयकल्पनाधिष्ठानभूतशुद्धचित्प्रकाशकं मुक्तिसौधनिश्रेणिकाचरमपर्वात्मकं भगवत्पादोद्घाटितं ब्रह्मसूत्रकृतां परमतात्पर्यगोचरं शुद्धाद्वैतमतं तुरीयपद प्रापकं तुरीयभूयीकारूपं तुरीयपरिच्छेदे श्रीमद्दीक्षितचरणाः प्रत्यपादयन्निति सुतरां शोभते । एतावता ग्रन्थेन अद्वैतमुक्तिसौधपथे उन्निनीषितानामधिकारिणां द्वैतवासनावासितानामाशयानुसारेण शनैश्शनैरुन्नयन साधनप्रक्रियाविशेषशालित्वेन मध्वरामानुजश्रीकण्ठभगवत्पादमतानां क्रमसन्निवेश इति द्वितीयमपि कारणमुक्तं भवति । अधिकारिबुद्ध्यनुसारिक्रमेण मतानां निरूपणञ्च ब्रह्ममीमांसासूत्र एव दृश्यते । तथाहि तत्र द्वितीयाध्यायप्रथमपादे प्रत्यक्षादिप्रामाण्याभिनिवेशिनां सहसा शुद्धाद्वैतबोधासंभवमभिप्रेत्यात्यन्तभेदाश्रयणेन वेदार्थाद्वैतनिर्णयानुपयोगिनं लोकव्यवहारमात्रोपयुक्तं आरंभसंघातवादद्वयं निरस्या भेदांशेन वेदार्थभूताद्वैतसमर्थने उपकुर्वाणं भेदांशेन

प्रत्यक्षादिक्रमत्यनुसरन्तं कर्मोपासनाकाण्डाधिकार्यनुकूलं परिणामवादं विवर्तवादप्रत्यासन्नं प्रत्यक्षादिप्रामाण्याश्रयणेऽपि नाद्वैतसमन्वये कश्चन बाधोऽस्तीति दर्शयितुं प्रथमतः 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' इति सूत्रेण प्रदर्श्य भेदाभेदाश्रयणेनात्यन्तभेदाद्विमुखचित्तस्य पुरुषस्यानन्तरं भेदांशनिराकरणेन केवलाभेदो बोधयितुं शक्यत इति भावेन पश्चात् 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिसूत्रेण श्रुतिपरमतात्पर्यगोचरकेवलाभेदपर्यवसायी ज्ञानकाण्डाधिकार्यनुकूलः विवर्तवादः प्रदर्शितः। तदुक्तं संक्षेपशारीरके

'आरंभसंहतिविकार विवर्तवादाश्रित्य वादिजनता खलु वावदीति।
आरंभसंहतिमते परिहृत्य वादौ द्वावत्रसंग्रहपदं नयते मुनीन्द्रः॥'

इति॥

अत्रभोक्त्रापत्तिसूत्रे तदनन्यत्वसूत्रे च क्रमेणेत्यर्थः।

'आरुह्य भूमिमधरामितराधिरोढुं शक्येति शास्त्रमपि कारणकार्यभावम्।
उक्त्वा पुरापरिणतिप्रतिपादनेन संप्रत्यपोहति विकारमृषात्वसिद्धयै॥'

इति च॥ विवर्तवादस्य परिणामवादः पूर्वभूमिः ब्रह्मणोऽन्यथाभावस्य सत्यत्वे परिणामवादः मिथ्यात्वे विवर्तवाद इत्येतावानेव विवर्तपरिणामवादयोर्विशेषः। सत्यत्वबुद्ध्यनुपमर्देनैव कर्मोपासनकाण्डयोः प्रवृत्तिः। सत्यत्वबुद्ध्युपमर्देन ज्ञानकाण्डप्रवृत्तिः अतः परिणामवादस्य प्राथम्यं विवर्तवादस्य च पश्चात्त्वं इत्यादि च संक्षेपशारीरकादावेवस्पष्टं। दीक्षितेन्द्राणामेतादृशमतचतुष्टयक्रमलेखप्रयोजकाभिप्रायविशेषश्च, चतुर्मतसारसंग्रहोपक्रमे ब्रह्मसूत्रात्मकपारिजातवृक्षस्य विविधशाखायितमध्वादि नानाभाष्योदितलोकान्तरारोहणलभ्यनानारसाढयफलवितत्यपेक्षया मूलस्तंभायितभगवत्पादभाष्योदितस्य अनारुह्य इहैव लभ्यस्य महाफलस्याधिकतरस्वादुत्वोक्त्या भगवत्पादमतसंग्रहरूपनयमंजरीनामक तुरीयपरिच्छेदोपक्रमे मध्वादिनाना भाष्यादृततत्तत्सगुणफलतेतेः भगवत्पाद भाष्यादृतातिमहाफलविशेषरूपानन्दसिन्ध्वंशभावापन्नतत्तत्सरिद्रूपत्वकीर्तनेन उपनिषद्देव्याः कण्ठाभरणत्वेन शोभावहत्वमभिप्रेत्य न्यायमुक्तावलीनयमयूखमलिका नयमणिमाला इति क्रमेण मध्वरामानुज श्रीकण्ठमतसंग्राहकपरिच्छेदत्रयस्य मालिकात्वरूपणेन नामनिर्देश-

करणेन भगवत्पादमतसंग्राहकान्तिमपरिच्छेदस्य नयमञ्जरीति पूर्वतननामत्रयवैजात्येन मञ्जरीत्वरूपणेन नामनिर्देशकरणेन च भगवत्पादमतं उपनिषद्भ्याः कर्णाभरणशिरोभूषारूपत्वेनातिशयितशोभावहं न केवलं मणिमुक्तादिग्रथितमालावत् दृष्टिमात्राकर्षकसौन्दर्यमात्रशालि अपि तु सहृदयहृदयमधुपावलीसमाकर्षकगुणगरिमातिशयोपेतं सहृदयहृदय मधुपकुलसमास्वाद्यब्रह्मानन्दमधुरसमधुरमक्लेशेनातिकठिनविषयावबोधकमृदुलपदसन्निवेशशालि भगवत्पादीयभाष्यादिग्रन्थमण्डिततया नितान्तमार्दवोपेतमपीति भगवत्पादमते तेषामतिशयितादरविशेषावगमात् तदीयात्युत्तमशिवाद्वैतनिर्णयानन्दलहरीमुखग्रन्थपरिशीलनाच्च स्फुटमवगम्यत इति नात्र विषये विमतिलेशस्याप्यवसरः। शुद्धाद्वैतावस्थारूपपरममोक्षप्रापक तत्त्वज्ञानस्य द्वैतावस्थाभेदरूपबन्धप्रापकं कर्मबहिरङ्गसाधनत्वेन भगवत्पादभाष्ये बहुषुस्थलेषु द्वैतैकत्वशब्देन व्यवहृतं विशिष्टाद्वैतपदेनेतरैःस्वभाष्ये व्यवहृतम्। व्यष्टिविवक्षायां द्वैतरूपं समष्टिविवक्षायामेकत्वरूपं समष्टिव्यष्ट्यात्मकं द्वैतैकत्वात्मकहिरण्यगर्भपदमपरमोक्षरूपं फलत्वेनस्वीकुर्वत् उपासनमन्तरङ्गसाधनत्वेन व्यवहरतां भगवत्पादानामपि द्वैतद्वैतैकत्वाद्वैतबोधकमतानां क्रमिकोत्तरोत्तर भूमिकारूपत्वमभिमतमेवेति स्फुटं प्रतीयते इत्यपिबोध्यम्। एवं तुरीयं मध्वादिमतचतुष्टयस्य मुक्तिहेतुक्रमिकभूमिकाचतुष्टयरूपत्वं तदीय क्रमपाठसूचितमुपपादितम्। तथा च दीक्षितेन्द्रैः चतुर्मतसारसंग्रहग्रन्थसंगृहीते उपासनामार्गविशेषरूपे मध्वरामानुज श्रीकण्ठमतत्रये वस्तुतश्शुद्धस्यनिर्गुणस्य एकरूपस्यापि परब्रह्मणःमायोपाधिकत्वेन सगुणस्य नानाप्रकारेणोपासनासंभवात् दहरशाण्डिल्यादि विभिन्नगुणकोपासनाभेदवत् दीक्षितचरणैः 'उद्घाट्य योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचिगृह्यमाणः। यः प्रस्फुरत्यविरतं परिपूर्णरूपः' इति पद्ये योगिभिः रेचकप्राणायामाभ्यासपाटवेन विकासिते हृदयकमले नीवारशूकाङ्गुष्ठप्रादेशादिपरिमाणानां मध्ये स्वस्वरुच्यनुसारिणा परिमाणेनाभिध्यातोऽपि भगवान् नित्यं गगनवद्व्यापकेन परिपूर्णरूपेणतेषां प्रकाशते इत्युक्तौपाधिकस्वाभाविकाविरुद्धपरिच्छेदापरिच्छेदगोचर तत्तत्परिमाणविशिष्टभगवध्यानापरिच्छिन्नभगवत्स्फुरणवच्च परस्परं ज्ञानमार्गेण चाविरुद्धे तथा ज्ञानमार्गरूपे, स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिताद्दढम्।

परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ इति श्रीगौडपाददिव्यसूक्तिप्रतिपादित रीत्या सर्वाविरुद्धे भगवत्पादमते च सामरस्यबुद्धिं सर्वेषामपि पूजनी सुमनसां मृत्कृतिरिति चतुर्मतसारसंग्रहोपक्रमे कीर्तनेन मतचतुष्टयावलंबिषु सर्वेष्वपि विद्वत्सु सामरस्यमावहद्भिः 'विधाय वेदान्त्रिविधाः कलाश्च भावज्ञमप्राप्य विशीर्ततोऽन्तः । शंभोः प्रियं कर्तुमिवावतीर्णः श्रीमान् जयत्यप्पयदीक्षितेन्द्रः' ॥ इति श्रीनीलकण्ठदीक्षितोक्तरीत्या सकलवेदकलाभावज्ञैः दीक्षितेन्द्रैरेव

'शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यन्नस्सगुणमपि तद्ब्रह्म भजतां ।
विरोधो नातीव स्फुरति नहि निन्दानयविदां
न सूत्राणामर्थान्तरमपि भवद्वार्थमुचितम् ॥'

इति प्रदर्शितं सामरस्यमार्गेण प्राप्य

'अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनाळस्य माभूवन्भंगुरा गुणाः ॥'

इत्युक्तरीत्या नास्तिकमतरूपबहुविधकण्टकैर्बहिर्व्याप्तस्य कमलनाळरूपस्य वैदिक-मतस्य स्वभावसिद्धगुणविशेषरूपतन्तूनां वैदिकमतान्तरमतविशेषाणां मिथस्सौभ्रात्राहाणां अन्योत्पादितसामरस्याभावभ्रान्तिप्रभवकलहरूपान्तश्छिद्रैर्यथा भंगुरत्वं न भवेत् तथा वेदाधिष्ठातृपुरुष एवानुकूल्यं संपाद्यानुगृह्णात्वस्मान् सर्वानपि वैदिकमहाजनानिति

'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥'

इति पूर्वमीमांसावार्तिकावगतवेदाख्यशब्दब्रह्माधिष्ठातृभावं मध्वमतावलंबिभिः नमो ब्रह्मणे नमस्ते वायो' इत्यादिश्रुतिप्रतिपादितवाय्वात्मकब्रह्मरूपेण रामानुज-मतावलंबिभिः विष्णुरूपेण श्रीकण्ठमतावलंबिभिः महेश्वररूपेण भगवत्पादमता-वलंबिभिः परब्रह्मरूपेण चोपास्यमानं सर्वलोकगुरुरूपम्

'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥'

इति अतिप्राचीन श्लोके पूर्वोक्तमध्वादिमतचतुष्टयक्रमनिर्देशप्रयोजकत्युम्त्युपोद्घ लकेन ब्रह्मा विष्णुः महेश्वरः परं ब्रह्म इत्येवं मध्वरामानुजश्रीकण्ठ भगवत्पादानुसन्धेयदेवतानामनिर्देशक्रमेण प्राचीनैरनुसंहितं परं ब्रह्म संप्राप्र्थ्योपसंहरामि लघुनिबन्धमिमम् ॥

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

ओं तत् सत् ॥

S. J. P. W. Ltd., Kmu.